आयुर्बंधकरणानंतरंनरकायुरुदयः तिर्यग्नरकायुः सत्ता, नरकायुरुदयः मनुष्यमनुष्यायुःसत्ता एतौभंगकौनारकस्यचतुर्षुगुणस्थानेषुप्राप्येते एतेपंचनैरयिकायुर्भंगकाः, देवायुषोपिपंच, देवायुरुदयः देवायुः सत्ताबध्यमानायुषांतिर्यगायुर्बंधः देवायुरुदयः देवतिर्यगायुःसत्ता मनुष्यायुर्बंधः देवायुरुदयः मनुष्यदेवायुः सत्ता बंधानंतरंदेवायुरुदयः तिर्यग्देवायुःसत्ता, देवायुरुदयः मनुष्यदेवायुःसत्ता एवं पंच, तिर्यगायुरुदयेनवभंगका, स्तिर्यगायुरुदयः तिर्यगायुः सत्ता अयंचपंचसुगुणेषुप्राप्यते, बध्यमानायुषांनरकायुर्बंधः तिर्यगायुरुदयः नरकतिर्यग्सत्तारूपः मिथ्यात्वेएवप्राप्यते, तिर्यगायुर्बंधः तिर्यगायुरुदयः तिर्यग्तिर्यगायुः सत्तारूपस्तुमिथ्यात्वेसास्वादनेप्राप्यते, मनुष्यायुर्बंधः तिर्यगायुरुदयः मनुष्यतिर्यग्सत्ता अयंभंगः मिथ्यात्वेसास्वादनेमुख्यतयाप्राप्यते, सम्यग्दृष्टेस्तिरश्चोऽपिदेवायुर्बंधः तिर्यगायुरुदयः सत्तालक्षणः मिश्रवर्जमिथ्यात्वादि देशविरतपर्यंतंप्राप्यते बंधानंतरंतिर्यगायुरुदयः नरकतिर्यग्सत्तातिर्यगायुरुदयः तिर्यग्तिर्यग्सत्तातिर्यगायुरुदयः मनुष्यतिर्यग्सत्तातिर्यगायुरुदयः देवतिर्यगायुः सत्ताएतेचत्वारोपिपूर्वबद्धायुषोऽपेक्षयापंचस्वपिगुणेषुप्राप्यन्ते एवंमनुष्यायुर्भंगानव, मनुष्यायुरुदयः मनुष्यायुः सत्तालक्षणः चतुर्दशसुगुणस्थानेषुप्राप्यते, बध्यमानानांनरकायुर्बंधः मनुष्यायुरुदयः नरकायुर्मनुष्यायुः सत्तारूपः मिथ्यात्वेतिर्यगायुर्बंधः मनुष्यायुरुदयः तिर्यग्मनुष्यायुः सत्तालक्षणभंगोमिथ्यात्वेसास्वादनेदेवायुर्बंधः मनुष्यायुरुदयः मनुष्यमनुष्यायुः सत्तारूपः भंगोमिथ्यात्वेसास्वादने, देवायुर्बंधः मनुष्यायुरुदयः देवमनुष्यायुः सत्तालक्षणभंगः मिश्रवर्जमिथ्यात्वाद्यप्रमत्तपर्यंतेषुप्राप्यतेइति अष्टाविंशतिभंगामिथ्यात्वेप्रथमेगुणस्थानेप्राप्यते, सास्वादनेषड्विंशतिभंगास्तिर्यग्मनुष्ययोः नरकायुर्बंधलक्षणौद्वौभंगौ न नरकायुषोहिबंधोमिथ्यात्वेएवेति छांति,

षडधिकाविंशतिः मिश्रेषोडशभंगावध्यमानभंगानांद्वादशानामभावात् वीसंच अविरतसम्यगदर्शने " वीसंभंगा " विंशतिर्भंगाः कथमितिचेदुच्यते तिर्यग्मनुष्याणांप्रत्येकमायुर्बंधकालेयेनरकातिर्यग्मनुष्यायुर्विषयास्त्रयोभंगाः यश्चदेवनैरयिकाणांप्रत्येकमायुर्बंधकालेतिर्यग्गतिविषयः एकैकोभंगः तेअविरतसम्यग्दृष्टेर्नसंभवंति ततः शेषाविंशतिरेवभवति, देशविरतेद्वादशभंगाः, यतोदेशविरतिस्तिर्यग्मनुष्याणांएवभवति, तेचातिर्यग्मनुष्यादेशविरताआयुर्बध्नन्तोदेवायुरेवबध्नंतिनशेषमायुरततरितरश्चांमनुष्याणांचप्रत्येकं परभवायुर्बंधकालात्पूर्वंएकैकोभंगः परभवायुर्बंधकालेपिदेवायुर्बंधरूपः एकैकोभंगः बंधोत्तरकालं तुचत्वारोभंगाः, चतुर्णामप्यायुषांमध्ये-अन्यतमंबद्ध्वाततोदेशविरतिंप्रतिपद्यते, तदपेक्षयाचत्वारोभंगाः प्राप्यन्ते, सर्वसंख्यया, द्वादश छद्दोसुत्तिद्वयोः प्रमत्ताप्रमत्तयोः प्रत्येकंषड्भंगाः, प्रमत्ताप्रमत्तसंयतादि मनुष्याएवभवंति बंधकालात्पूर्वंएकः बंधकालेतुदेवायुर्बंधरूपः एकः बंधोत्तरकालंतुचत्वारोपि-एवंषट्भंगाः, दोचउसुत्ति चतुर्षुअपूर्वकरणानिवृत्तिकरणसूक्ष्मसंपरायोपशांतमोहेषुगुणस्थानेषूपशमश्रेणिमधिकृत्यप्रत्येकंद्वौद्वौभंगौतद्यथा-मनुष्यायुरुदयः मनुष्यायुः सत्ता, अथवा बद्धायुषस्तुमनुष्यायुरुदयः देवमनुष्यायुः सत्तालक्षणएवद्वौभंगकौप्राप्येते एषविकल्पः परभवायुर्बंधोत्तरकालएतेह्यायुर्नबध्नंति, अतिविशुद्धत्वात्पूर्वबद्धेचायुषि उपशमश्रेणिंप्रतिपद्यंते ते, देवायुष्येवतान्यायूंषितदुक्तंकर्मप्रकृतौ तिसुआउगेसुबद्धेसु जेणसेढिंनारुहइ, ततः उपशमश्रेणिमधिकृत्यएतेषुद्वौद्वौएवभंगकौपूर्वबद्धायुष्कास्तुनक्षपकश्रेणिंप्रतिपद्यंते, ततः उपशमश्रेणिमधिकृत्येत्युक्तं क्षपकश्रेण्यांत्वेतेषांएकैकोभंगः मनुष्यायुरुदयः मनुष्यायुःसत्तालक्षणएवंनिरूपितंचायुःकर्मस्वरूपम् ९६॥

बत्रार्थः—हवे आउखाकर्मना भांगा गुणठाणे कहे छे.

मिथ्यात्व गुणठाणे नारकीना ९ देवताना ९ तिर्यंचना ९ ए अठावीस भांगा छे, सास्वादन गुणठाणे छवीस भांगा छे. मनुष्यना तथा तिर्यंचना नारकीबंधना २ भांगा नथी. मिश्र गुणठाणे सोळ भांगा छे. च्यारे गतिमध्ये बध्यमान भांगा नथी. बार बध्यमान भांगा नथी. समकित गुणठाणे वीस भांगा छे. च्यार अबंधना च्यार बांधी रह्या पछी बध्यमान च्यार छे. जे देवता नारकी समकित गुणठाणे मनुष्यायु बांधे. तिरि मनुष्य एक देवायु बांधे, समकितीने नरकतिरि आयुबंध नथी. छट्ठाथी मांडी तेरमा पर्यंत उंच बंध, उंच उदय, उंच नीचनी सत्ता, ए एक भांगो छे. एक अयोगी केवली गुणठाणे अबंधना बे भांगा छे. सत्ता ए एक भांगो पामीये जे कारणे क्षपकश्रेणि अबंधायु चढे परं बंधायु चढे नहीं. देशविरति गुणठाणे तिर्यंचना छ मनुष्यना छ ए बार पामीये अबंधनो १ बध्यमान एक देवतानो बांधी रह्या पाछल्या च्यार एवं ६ तिरिगातिना छ मनुष्यगातिना, छठ्ठे तथा सातमे गुणठाणे मनुष्यगातिना छ भांगा पामीये तथा आठमे नवमे दशमे इग्यारमे ए च्यार गुणठाणे मनुष्यायुसत्ता मनुष्यायुउदय. मनुष्यायुउदयदेव मनुष्यायुसत्ता ए बे भांगा पामीये. कोईक जीव आउखो बांधे, उपशमश्रेणि चढे तथा क्षीणमोह गुणठाणे मनुष्यायु उदयसत्ता ए एक भांगो पामीये. जे कारणे क्षपकश्रेणि अबंधायु चढे परंबंधायु चढे नहीं ॥ ९६ ॥

**छनवछक्कंतिगसत्ता, दुगंदुगंतिगंदुगंतिअट्ठचउदुगं ।**
**छचउदुगंपणचउ, चउदुगंचउपणगएगचउ ॥९७॥**

टीका—सांप्रतंनामकर्मस्वरूपंविभजन्नाह छनवछक्कंइत्यादि-

गाथायुग्मं तत्रव्याख्या तत्रमिथ्यादृष्टेर्नाम्नः षट्बंधस्थानानि तद्य-
थात्रयोविंशतिः पंचविंशतिः षड्विंशतिः अष्टाविंशतिः एकोनत्रिं-
शत् त्रिंशत, तत्रापर्याप्तकैकेंद्रियप्रायोग्यं बध्नतः त्रयोविंशतिः, तस्यां
चबध्यमानायां बादरसूक्ष्मप्रत्येकसाधारणैर्भंगाश्चत्वारः पर्याप्तकेंद्रिय
प्रायोग्यापर्याप्तद्वित्रिचतुरिंद्रियतिर्यग्पंचेंद्रियमानुष्यप्रायोग्यंबध्नतःपं-
चविंशतिः, तत्रपर्याप्तैकेंद्रियप्रायोग्यायांपंचविंशतौबध्यमानायांभंगा-
विंशतिः अपर्याप्तद्वित्रिचतुरिंद्रियतिर्यग्मनुष्यपंचेंद्रियप्रायोग्यायांचब-
ध्यमानायांतुप्रत्येकंएकैकोभंगइतिसर्वसंख्ययापंचविंशतिः पर्याप्तैके-
द्रियप्रायोग्यंबध्नतः षड्विंशतिः तस्यांचबध्यमानायांभंगाः षोडश,
देवगतिनरकगतिप्रायोग्यंबध्नतः अष्टाविंशतिः देवगत्यष्टाविंशतौ
अष्टौभंगाः नरकाष्टाविंशतौएकभंगः एवंनवपर्याप्तद्वित्रिचतुरिंद्रिय-
तिर्यग्मनुष्यपंचेंद्रियप्रायोग्यांबध्नतां एकोनत्रिंशत्, तत्रपर्याप्तद्वित्रि-
चतुरिंद्रियप्रायोग्यायांएकोनत्रिंशतिबध्यमानायांप्रत्येकंअष्टौभंगाः ।
तिर्यग्पंचेंद्रियप्रायोग्यायांषट्चत्वारिंशत् शतानिअष्टाधिकानिमनुष्य-
गतिप्रायोग्यायामप्येतावंतएवभंगाः सर्वसंख्ययाचत्वारिंशदधिकानि-
द्विनवतिशतानि ९२४०। यातुदेवगतिप्रायोग्यातीर्थंकरनामसहिता
एकोनत्रिंशत् साचमिथ्यादृष्टेर्नबंधमायातितीर्थंकरनामसम्यक्त्वप्रत्य-
यात्, मिथ्यादृष्टेश्चतदभावात्, पर्याप्तद्वित्रिचतुरिंद्रियतिर्यग्पंचेंद्रिय-
प्रायोग्यंबध्नतः त्रिंशत्, तत्रपर्याप्तद्वित्रिचतुरिंद्रियप्रायोग्यायांत्रिंश-
तिबध्यमानायांप्रत्येकमष्टौभंगाः, तिर्यग्पंचेन्द्रियप्रायोग्यायांत्वष्टा-
धिकानिषट्चत्वारिंशच्छतानि ।४६०८ सर्वसंख्ययाद्वात्रिंशत् उत्तरा-
णिषट्चत्वारिंशत यावन्मनुष्यगतिप्रायोग्यां त्रिंशत् तीर्थंकरनामस-
हितायाचदेवगतिप्रायोग्याआहारकद्विकसहितातेउभेअपिमिथ्यादृष्टे-
र्नबंधमायातः, तीर्थंकरनाम्नः सम्यक्त्वप्रत्ययत्वादाहारकनाम्नस्तु-
संयमप्रत्ययत्वात्, उक्तंच सम्मत्तगुणनिमित्तंतित्थयरं संयमेणआहा-

रमिति तत्र त्रयोविंशत्यादिषुभंगसंख्यामिथ्यात्वप्रत्ययनिरूपणार्थमाह ॥ गाथा ॥

चउपणवीसासोलस, नवचत्तालसयायबाणउई ।
बत्तीसुत्तरछाया, लसयामिच्छस्सबंधविही ॥ १ ॥

तथामिथ्यादृष्टेर्नवउदयस्थानानि तद्यथाएकविंशतिः चतुर्विंशतिः सप्तसहस्राणि सप्तशतानि त्रिसप्तत्यधिकानि तथाहिएकाविंशत्युदये एकचत्वारिंशत्, तत्रैकेंद्रियाणामेव अन्यत्रचतुर्विंशत्युदयस्याभावात्, पंचविंशत्युदयेद्वात्रिंशत् तत्रएकेंद्रियाणांसप्तवैक्रियतिर्यग्पंचेंद्रियाणामष्टौवैक्रियमनुष्याणामष्टौ देवानामष्टौ नारकाणामेकः एवंद्वात्रिंशत्षड्विंशत्युदयेषट्शतानि तत्रैकेंद्रियाणांत्रयोदश १३ विकलेंद्रियाणां नव, तिर्यग्पंचेंद्रियाणांद्वेशतेएकोननवत्यधिके २८९ मनुष्याणामपिद्वेशतेएकोननवत्यधिके ॥२८९॥ सप्तविंशत्युदयेएकत्रिंशत् तंत्रएकेंद्रियाणांषट् ६ वैक्रियातिर्यग्पंचेंद्रियाणामष्टौवैक्रियमनुष्याणामष्टौ देवानामष्टौ नारकाणामेकः, अष्टाविंशत्युदये एकादशशतानिनवनवत्यधिकानि, तत्रविकलेंद्रियाणांषट्, तिर्यग्पंचेंद्रियाणांपंचशतानिषट्सप्तत्यधिकानि ५७६ वैक्रियातिर्यग्पंचेंद्रियाणांषोडश १६ मनुष्याणांपंचशतानिषट्सप्तत्यधिकानि ५७६ वैक्रियमनुष्याणामष्टौ देवानां षोडश, नारकाणांएकः, एकोनत्रिंशदुदयेसप्तदशशतानिएकाशीत्यधिकानि ॥१७८१ तत्रविकलेंद्रियाणांद्वादश, तिर्यक्पंचेंद्रियाणामेकादशशतानिद्विपंचाशदधिकानि ११५२ वैक्रिय तिर्यक्पंचेंद्रियाणांषोडश १६ मनुष्याणांपंचशतानिषट्सप्ततिअधिकानिवैक्रियमनुष्याणामष्टौ ८ देवानांषोडश, नारकाणांएकः, त्रिंशदुदयेएकोनत्रिंशत्शतानिचतुर्दशाधिकानि, तत्रविकलेंद्रियाणामष्टादशतिर्यक्पंचेंद्रियाणांसप्तदशशतानिअष्टाविंशत्यधिकानि१७२८ वैक्रिय-

तिर्यक्पंचेंद्रियाणामष्टौ ८ मनुष्याणामेकादशशतानि द्विपंचाशदधिकानि ११५२ देवानामष्टौ, एकत्रिंशदुदयेएकादशशतानिचतुःषष्ट्यभ्यधिकानि ११६४ तत्रविकलेंद्रियाणांद्वादशः १२ तिर्यक्पंचेंद्रियाणामेकादशशतानिद्विपंचाशदधिकानि ११५२ सर्वसंख्ययासप्तसहस्राणिसप्तदशशतानित्रिसप्तत्यधिकानि ७१७७३ मिथ्यादृष्टेः उदयभंगानिमिथ्यात्वेषट्सत्तास्थानानि तद्यथाद्विनवति रेकोननवतिः अष्टाशीतिः, अशीतिः, अष्टसप्ततिः, तत्रद्विनवतिश्चतुर्गतिकानामपिमिथ्यादृष्टीनामवसेया, यदापुनर्नरकेषुबद्धायुष्कोवेदकसम्यग्दृष्टिः सत्तीर्थंकरनामसहितःपरिणामपरावर्त्तनेनमिथ्यात्वंगतः नरकेषुसमुत्पद्यते तदातस्यैकोननवतिरंतर्मुहूर्तकालंयावल्लभ्यते, उत्पत्तेरुर्ध्वमंतर्मुहूर्त्तानंतरतुसोपिसम्यक्त्वप्रतिपद्यते, अष्टाशीतिश्चतुर्गतिकानामपिमिथ्यादृष्टीनांषडशीतिरशीतिश्चएकेंद्रियेषुयथायोग्यंदेवगतिप्रायोग्येनरकगतिप्रायोग्येचोद्वलितेसतिलभ्यते, एकेंद्रियभवादुद्वृत्यविकलेंद्रियेषु तिर्यक्पंचेंद्रियेषुमनुष्येषुवामध्येसमुत्पन्नानां सर्वपर्याप्तिभवादूर्ध्वमप्यंतर्मुहूर्त्तकालंयावल्लभ्यतेपरतोऽवश्यं वैक्रियशरीरादिबंधसंभवान्नलभ्यते अष्टसप्ततिस्तेजोवायूनांमनुष्यगतिमनुष्यानुपूर्व्योरुद्वलितयोः प्राप्यते, तेजोवायुभवादुद्वृत्यविकलेन्द्रियेषुतिर्यक्पंचेन्द्रियेषुवामध्येसमुत्पन्नानांअंतर्मुहूर्तकालंयावत्परतोऽवश्यंमनुष्यगतिमनुष्यानुपूर्व्योर्बंधसंभवात् तदेवंसामान्येनमिथ्यादृष्टेः बंधोदयसत्तास्थानान्युक्तानि, संप्रतिसंवेधउच्यते, तत्रमिथ्यादृष्टेस्त्रयोविंशतिंबध्नतः प्रागुक्तानिनवाप्युदयस्थानानिसम(ने)ग्रानिसंभवन्ति, केवलमेकविंशतिपंचविंशतिसप्तविंशतिअष्टाविंशतिएकोनत्रिंशद्रूपेषुपंचसुउदयस्थानेषुदेवनैरयिकानधिकृत्ययेभंगाः प्राप्यन्ते तेनसंभवन्ति त्रयोविंशतिर्हिअपर्याप्तकेन्द्रियप्रायोग्यः नचदेवाअपर्याप्तैकेन्द्रियप्रायोग्यंबध्नंति तेषांतत्रोत्पादाभावात्, नापिनैरयिकास्तेषांसामान्यतोप्येकेन्द्रियप्रायोग्यबंधासंभवात्, ततोऽत्र-

देवनैरयिकसत्कोदयस्थानभंगा न प्राप्यन्ते, सत्तास्थानानिपंचतद्यथा-द्विनवतिः अष्टाशीतिः षडशीतिः अशीतिः अष्टसप्ततिश्चतत्रैक-विंशति चतुर्विंशति पंचविंशति षड्विंशत्युदयेषुपंचापिसत्ता-स्थानानि नवरं पंचविंशत्युदयेतेजोवायुकायिकानधिकृत्याष्टसप्ततिः प्राप्यते, षड्विंशत्युदयेतेजोवायुकायिकान् तेजोवायुभवादुध्धृत्यवि-कलेन्द्रियातिर्यक्पंचेन्द्रियेषुमध्येसमुत्पन्नान्अधिकृत्याष्टाविंशत्येकोन-त्रिंशत्एकत्रिंशद्रूपेषुपंचसुअष्टसप्ततिवर्जानिशेषाणिप्रत्येकंचत्वारि-चत्वारिसत्तास्थानानिसर्वसंख्ययासर्वाण्युदयस्थानानिअधिकृत्यत्रयो-विंशतिबंधकस्यचत्वारिंशत्सत्तास्थानानि, एवंपंचविंशति षड्विंशति बंधकानामपिवक्तव्यं केवलमिहदेवाअप्यात्मीयेषुसर्वेष्वप्युदयस्थाने-षुवर्तमानपर्याप्तैकेन्द्रिययोग्यांपंचविंशतिं षड्विंशतिंचबध्नंति इत्य-वसेयं, नवरंपंचविंशतिबंधेबादरपर्याप्तप्रत्येकास्थिरशुभदुर्भगानादे-ययशः कीर्तिअयशः कीर्तिपदैरष्टौभंगाः अवसेयाः नशेषाः सूक्ष्मसाधारणपर्याप्तिषुमध्येदेवस्योत्पादाभावात्, सत्तास्थानभावना पंचविंशतिबंधेषड्विंशतिबंधेचप्रागिवकर्त्तव्या सर्वसंख्ययाचत्वारिंशत् सत्तास्थानानि, अष्टाविंशतिबंधकस्यमिथ्यादृष्टेर्द्वेउदयस्थाने तद्यथा-त्रिंशत्एकत्रिंशत्, तिर्यक्पंचेंद्रियमनुष्यानधिकृत्यएकत्रिंशत् तिर्यग्पं-चेंद्रियानेवअष्टाविंशतिः बंधकस्य चत्वारिसत्तास्थानानिद्विनवतिः एकोननवतिः अष्टाशीतिः षडशीतिः तत्रत्रिंशदुदयेचत्वार्यपितत्रा-प्येकोननवतिर्योनामवेदकसम्यग्दृष्टिर्बद्धतीर्थकरनामा परिणामपरिव-र्त्तनेनमिथ्यात्वेगतोनारकाभिमुखोनरकगतिप्रायोग्यामष्टाविंशतिंब-ध्नाति, तमधिकृत्यवेदितव्यानिशेषाणि पुनस्त्रीणिसत्तास्थानान्यविशे-षेणातिर्यग्मनुष्याणांएकत्रिंशदुदयेएकोननवतिवर्जानित्रीणिसत्तास्था-नानिएकोननवतिर्हितीर्थकरनामसहिता नचतीर्थकरनामतिर्यक्षुसंभ-वति सर्वसंख्ययाअष्टाविंशति(बंधे)सप्तसत्तास्थानानि देवगतिवर्जा-

शेषामेवभवतित्रिंशतंविकलेंद्रियातिर्यग्पंचेंद्रियप्रायोग्यांमनुष्यगतिप्रा-
योग्यांचबध्नतोमिथ्यादृष्टेः सामान्येननवापिप्राक्तनानिउदयस्था-
नानितद्यथाद्विनवतिः एकोननवतिः अष्टाशीतिः षडशीतिः अ-
शीतिः षट्सप्ततिः तत्रैकविंशत्युदयेसर्वाण्यपिइमानिप्राप्यन्ते, त-
त्राप्येकोननवतिः बद्धतीर्थकरनामानंमिथ्यात्वंगतंनैरयिकमधिकृत्या-
वसेया द्विनवतिः अष्टाशीतिश्चदेवनैरयिकमनुजविकलेन्द्रियतिर्यग्-
पंचेन्द्रियैकेन्द्रियानधिकृत्यषडशीतिरशीतिश्चविकलेन्द्रियतिर्यग्पञ्चे-
न्द्रियमनुजैकेन्द्रियानधिकृत्यवेदितव्या, अष्टसप्ततिरेकेन्द्रियतिर्यग्पंचे-
न्द्रियानधिकृत्यचतुर्विंशत्युदयेएकोननवतिवर्जानिशेषाणि पंचसत्ता-
स्थानानितानिचैकेन्द्रियानधिकृत्यवेदितव्यानि, अन्यत्रचतुर्विंशति-
रुदयस्यानाभावात् । पंचविंशत्युदयेपिषडपिसत्तास्थानानि तानि-
यथैकविंशत्युदयेभावितानितथैवभावनीयानि षड्विंशत्युदय एको-
ननवतिवर्जानिशेषाणि पंचसत्तास्थानानितानिप्रागिवभावनीयानि,
एकोननवतिस्तुनलभ्यते यतोमिथ्यादृष्टेः सतः एकोननवतिः
नरकेपूत्पद्यमानस्यनैरयिकस्यप्राप्यते न शेषस्य नच नैरयिकस्य
षड्विंशत्युदयः संभवति, सप्तविंशत्युदयेअष्टसप्ततिवर्जानिशेषाणि
पंचसत्तास्थानानिप्रागिवभावनीयानि, एकोननवतिस्तुनलभ्यते यतो
मिथ्यादृष्टेः सतः एकोननवतिर्नरकेपूत्पद्यमानस्यनैरयिकस्यप्राप्यते
नशेषस्यनचनैरयिकस्यषड्विंशत्युदयः संभवति, सप्तविंशत्युदये अ-
ष्टसप्ततिवर्जानि शेषाणिपंचसत्तास्थानानि तत्रैकनवतिः प्रागुक्तरू-
पंनैरयिकमधिकृत्यद्विनवतिरष्टाशीतिश्चदेवनैरयिकमनुजविकलेन्द्रिय-
तिर्यग्पंचेन्द्रियैकेन्द्रियाणामातपोद्योतान्यतरसहितानांभवति, नार-
कादीनांवानचतेषामष्टसप्ततिरतेषामवश्यंमनुष्यद्विकबंधसंभवात् ए-
तान्येवपंचसत्तास्थानानि अष्टाविंशत्युदयेतत्रैकोननवतिर्द्विनवतिर-
ष्टाशीतिश्चप्रागिवभावनीया, षडशीतिरष्टाशीतिश्चविकलेन्द्रियतिर्य-

ग्पंचेन्द्रियमनुष्यानधिकृत्यवेदितव्याएवमेकोनत्रिंशदुदयेप्येतानिएव-
पंचसत्तास्थानानि भावनीयानि, त्रिंशदुदयेचत्वारितद्यथात्रिनवति-
रष्टाशीतिः षडशीतिरशीतिरेतानिविकलेन्द्रियतिर्यग्पंचेन्द्रियमनु-
ष्यानधिकृत्यवेदितव्यानि, एकोननवतिः षट्सुप्राप्यते, यतः सा
मिथ्यादृष्टेः सतोवद्धतीर्थंकरनाम्नोमिथ्यात्वंगतस्यनैरयिकस्यप्राप्यते
नचनैरयिकस्यत्रिंशदुदयोऽस्ति एकत्रिंशदुदयेप्येतान्येवचत्वारितानि-
चविकलेन्द्रियतिर्यग्पंचेन्द्रियानधिकृत्यद्रष्टव्यानि, सर्वसंख्ययामिथ्या-
दृष्टेरेकोनत्रिंशत्त्रिंशतोबध्नतः पंचचत्वारिंशत्सत्तास्थानानि यातुदेवग-
तिप्रायोग्याएकोनत्रिंशत्सामिथ्यादृष्टेर्नबंधमायाति कारणंप्रागेवोक्तं
मनुष्यदेवगतिप्रायोग्यवर्जांशेषांत्रिंशतं विकलेन्द्रियतिर्यग्पंचेन्द्रिय-
प्रायोग्यांबध्नतः सामान्येनप्रागुक्तानिनवोदयस्थानानि, एकोननवति
वर्जानिपंचसत्तास्थानानि, एकोननवतिसत्कर्मणस्तिर्यग्गतिप्रायोग्य-
बंधारंभात्भवात्तानिपंचसत्तास्थानानि, एकविंशतिचतुर्विंशतिपंच-
विंशति षडविंशत्युदयेषुप्रागिवभावनीयानि, सप्तविंशत्यष्टाविंशति ए-
कोनत्रिंशद्रूपेषुपंचसूदयस्थानेषुअष्टसप्ततिवर्जानिप्रत्येकंशेषाणिचत्वा-
रि २ भावनीयानि अष्टसप्ततिप्रतिषेधेकारणंप्रागुक्तमनुसरणीयं सर्व-
संख्ययामिथ्यादृष्टेः त्रिंशतंबध्नतः चत्वारिंशत्सत्तास्थानानि मनुज-
गतिदेवगतिप्रायोग्यात्रिंशत्मिथ्यादृष्टेः नबंधमायाति मनुजगतिप्रा-
योग्याहितीर्थंकरनामसहितादेवगतिप्रायोग्यात्वाहारकतीर्थंकरनामस-
हितातत: साकथंमिथ्यादृष्टेःबंधोदयसत्तास्थानसंवेधः, संप्रतिसास्वा-
दनस्यबंधोदयसत्तास्थानान्युच्यंते, तिगसत्तदुगंति त्रीणिबंधस्थानानि
तद्यथाअष्टाविंशतिः एकोनत्रिंशत्त्रिंशत्तत्राष्टाविंशतिर्द्वेधा देवग-
तिप्रायोग्यानरकगतिप्रायोग्याचतत्र नरकगतिप्रायोग्या सास्वा-
दनस्यबंधमायाति, देवगतिप्रायोग्यायाश्चबंधकास्तिर्यग्पंचेन्द्रियमनु-
ष्याश्चतस्यांचाष्टाविंशतौबध्यमानायांअष्टौभंगाः तथासास्वादनाएके-

न्द्रियविकलेन्द्रियतिर्यग्पंचेन्द्रियमनुष्याः देवानैरयिकाश्चतिर्यग्पंचे-
न्द्रियप्रायोग्यांमनुष्यप्रायोग्यांवाएकोनत्रिंशतंबध्नंतिनशेषां अत्रभंगाः
चतुःषष्टिशतानि सास्वादनायादितिर्यग्पंचेन्द्रियप्रायोग्यामथवा मनु-
ष्यगतिप्रायोग्यां एकोनत्रिंशतंबध्नंति तथापि न हुंडसंस्थानंसेवार्त्त
संहननंच बध्नंति मिथ्यात्वोदयाभावात् ततश्चतिर्यग्पंचेन्द्रियप्रायो-
ग्यामेकोनत्रिंशतंबध्नंति पंचभिः संस्थानैः पंचभिः संहननैः
प्रशस्ताप्रशस्तविहायोगतिभ्यांस्थिरास्थिरशुभाशुभसुभगदुर्भगसुस्व-
रदुःस्वरादेयानादेययशोअयशोभ्यांचभंगाद्वात्रिंशत्शतानिसर्वबंधस्था-
नसंख्यया अष्टाधिकानिषण्णवतिशतानि ९६०८ अत्रभाष्य गाथा॥

अट्ठसयाचउसट्ठी, बत्तीससयायसासणेभेया ।
अट्ठावीसाइसु, सवाणट्ठहियछन्नुइ ॥ १ ॥

सुगमा, तथासास्वादनस्योदयस्थानानि सप्त तद्यथा, एकविंशतिः
चतुर्विंशतिः पंचविंशतिः षड्विंशतिः एकोनत्रिंशत् त्रिंशत् एक-
त्रिंशत् तत्रएकविंशत्युदये एकेन्द्रियविकलेन्द्रियतिर्यग्पंचेन्द्रिय
मनुष्यदेवानधिकृत्यवेदितव्या नरकेषुसास्वादनोनोत्पद्यते इतिकृ-
त्वातद्विषयोएकोभंगः सइहनसंभवति किंतुशेषाएवतेचविकलेन्द्रि-
याणांद्वौद्वौइतिषद्वातिर्यग्पंचेन्द्रियाणामष्टौ मनुष्यणामष्टौ देवानाम-
प्यष्टौ सर्वसंख्यया एकविशत्युदयेद्वात्रिंशद्भंगाः चतुर्विंशत्युदयेएके-
न्द्रियेषुउत्पन्नमात्रस्यअत्रापिबादरपर्याप्तकेनसहयशः कीर्त्ययशःकीर्त्ति-
भ्यांद्वौद्वौभंगौतावेवसंभवतः नशेषाः, सूक्ष्मेषुअपर्याप्तेषुसास्वादनस्यो-
त्पादाभावात् अतएवविकलेन्द्रियाणां तिर्यग्पंचेन्द्रियाणां मनुष्याणां
च प्रत्येकमपर्याप्तकेनसह य एकैकोभंगः सइहनसंभवति किंतुशेष-
परावर्तेचविकलेन्द्रियाणां द्वौद्वौइतिषद्तिर्यग्पंचेन्द्रियाणामष्टौ मनुष्या-
णामप्यष्टौ देवानामप्यष्टौ सर्वसंख्यया एकविंशत्युदयेद्वात्रिंशद्भंगाः
चतुर्विंशत्युदये एकेन्द्रियेषुनध्ये उत्पन्नमात्रस्यअत्रापिबादरपर्याप्तके-

नसहयशः कीर्त्यंयशः कीर्त्तिभ्यांयौद्वौभंगौतावेवसंभवतः नशेषाः सूक्ष्मेषुसाधारणेषुतेजोवायुषुचमध्येसास्वादनस्योत्पादाभावात्, पंचविंशत्युदयो देवेषुमध्येउत्पन्नमात्रस्यप्राप्यतेनशेषस्यतत्रचाष्टौभंगाः तेचस्थिरास्थिरशुभाशुभयशः कीर्त्तिअयशः कीर्त्तिपदैरवसेयाः षड्विंशत्युदयोविकलेन्द्रियतिर्यग्पंचेन्द्रियमनुष्येषुमध्येउत्पन्नमात्रस्यअत्राप्यपर्याप्तकेनसहयएकैकोभंगः नसंभवति, अपर्याप्तकमध्येसास्वादनस्योत्पादाभावात् शेषास्तुसंभवंति तेचविकलेन्द्रियाणांप्रत्येकंद्वौद्वाविंशतिषट्तिर्यग्पंचेन्द्रियाणांद्वेशतेअष्टाशीत्यधिकेमनुष्याणामपिद्विशते अष्टाशीत्यधिकेसर्वसंख्ययाषड्विंशत्युदयेपंचशतानिद्व्यशीत्यधिकानि ५८२ सप्तविंशत्यष्टाविशत्युदयौनसंभवतः तौहिउत्पन्नस्यनंतरांतमुहूर्तेसतिभवति सास्वादनभावश्चोत्पन्नस्यनंतरमुत्कर्षतः किंचिदूनषडावलिकामात्रं ततः एतौसास्वादनस्यनप्राप्यतः एकत्रिंशदुदयेदेवनैरयिकाणांस्वस्थानपर्याप्तानांप्रथमसम्यक्त्वात् प्रच्यवमानानांप्राप्यते तत्रदेवस्यैकोनत्रिंशदुदयेभंगाअष्टौनैरयिकस्यैकइति सर्वसंख्यया नव ९ त्रिंशदुदयास्तिर्यग्मनुष्याणांपर्याप्तानांप्रथमसम्यक्त्वात् प्रच्यवमानानांदेवानामुत्तरवैक्रियेवर्त्तमानानांसास्वादनानां तत्रतिरश्चां मनुष्याणांचत्रिंशदुदयेप्रत्येकंद्विपंचाशदधिकान्येकादशशतानि ११५२ देवस्याष्टौसर्वसंख्ययात्रयोविशतिशतानिद्वादशाधिकानि २३१२ एकत्रिंशदुदयास्तिर्यग्पंचेन्द्रियाणांपर्याप्तानांप्रथमसम्यक्त्वात् प्रच्यवमानानांअत्रभंगाएकादशशतानिद्विपंचाशदधिकानि देवस्याष्टौसर्वसंख्ययात्रयोविंशतिशतानिद्वादशानि २३१२ एकत्रिंशदुदयेप्रत्येकंद्विपंचाशदधिकानिएकादशशतानि ॥ गाथा ॥

बत्तीसदुन्निअट्ठय, बासीइसासायपंचनवउदया
बारहियातेवीसं, बावन्निक्कारससयाय ॥ १ ॥

सुगमा, सर्वभंगसंख्ययासप्तनवत्यधिकानिचत्वारिंशत्शतानि सास्वा-
दनस्यद्वेसत्तास्थाने तद्यथाद्विनवतिः अष्टाशीतिश्चतत्रद्विनवतिः
आहारकचतुष्टयंबध्वाउपशमश्रेणितः प्रतिपतन्सास्वादनभावमनुग-
च्छतितस्यलभ्यते नशेषस्य, अष्टाशीतिः चतुर्गतिकानामपिसास्वा-
दनानां, संप्रतिसंवेधउच्यते तत्राष्टाविंशतिबध्नतः सास्वादनस्यद्वेउद-
यस्थाने तद्यथात्रिंशत्एकत्रिंशत् अष्टाविंशतिर्हिसास्वादनस्यबंध-
योग्याभवति देवगतिविषयानचकरणापर्यासःसास्वादनः देवग-
तियोग्यंबध्नातिततः शेषाउदयानसंभवंति, अत्रमनुष्यानधिकृत्यत्रि-
शदुदयेद्वेअपिसत्तास्थानेतिर्यग्पंचेद्रियान्सास्वादनानधिकृत्याष्टाशीति-
रेवयतोद्विनवतिरुपशमश्रेणितः प्रतिपततोलभ्यते, नचतिरश्चामुप-
शमश्रेणिसंभवः, एकत्रिंशदुदयेप्यष्टाशीतिरेवयतोद्विनवतिरुपशमश्रे-
णितः प्रतिपततोलभ्यते नचतिरश्चामुपशमश्रेणिसंभवः एकत्रिंश-
दुदयेप्यष्टाशीतिरेवयतएकत्रिंशदुदयस्तिर्यग्पंचेंद्रियाणांनचतिरश्चांद्वि-
नवतिः संभवति प्रागुक्तयुक्तेः एकोनत्रिंशतंतिर्यग्पंचेंद्रियाणां-
मनुष्यप्रायोग्यांबध्नतः सास्वादनेसप्ताप्युदयस्थानानि, तत्रएकेंद्रिय-
विकलेंद्रियतिर्यग्पंचेंद्रियमनुष्यदेवनैरयिकाणांसास्वादनानांस्वीयस्वी-
योदयस्थानेषु वर्त्तमानानामेवसत्तास्थानमष्टाशीतिः नवरंमनुष्यस्य-
त्रिशदुदयेवर्त्तमानस्योपशमश्रेणितः प्रतिपततः सास्वादनस्यद्विनव-
तिः एवंत्रिशद्बंधकस्यापिवक्तव्यं सर्वाण्यप्युदयस्थानान्यधिकृत्यसामा-
न्येनसर्वसंख्ययासास्वादनस्याष्टौसत्तास्थानानि, संप्रतिसम्यग्मिथ्या-
दृष्टेः बंधोदयसत्तास्थानान्यभिधीयंते, दुर्गतिमदुर्गति मिश्रेगुणस्था-
नकेद्वेबंधस्थाने तद्यथा अष्टाविंशतिः एकोनत्रिंशत् तत्रतिर्यग्म-
नुष्याणांसम्यग्मिथ्यादृष्टीनांदेवगतिप्रायोग्यमेवबंधमायाति ततः
शेषाअष्टाविंशतिः तत्रभंगाअष्टौएकोनत्रिंशतिमनुष्यगतिप्रायोग्यां-
बध्नतांदेवनैरयिकाणां अत्राप्यष्टौभंगाः तेचउभयत्रापि । स्थिरा-

स्थिरशुभाशुभयशः कीर्त्त्ययशः कीर्त्तिपदैरवसेयाः शेषास्तुपरावर्त्त-
मानप्रकृतयः शुभाएवसम्यग्मिथ्यादृष्टीनांबंधमायांति, ततः शेषा-
भंगाः नप्राप्यंते, त्रीण्युदयस्थानानि तद्यथाएकोनत्रिंशत्त्रिंशत्एक-
त्रिंशत् तत्रैकोनत्रिंशतिदेवानधिकृत्याष्टौभंगाः नैरयिकानधिकृत्यैकः
सर्वसंख्ययानवत्रिंशतितिर्यग्पंचेंद्रियानधिकृत्यसर्वपर्याप्तिपर्याप्तयोग्या-
निद्विपंचाशदधिकानिएकादशशतानिमनुष्यप्रायोग्याण्येवंद्विपंचाशद-
धिकानिएकादशशतानिसर्वसंख्ययात्रयोविंशतिशतानिचतुरधिकानि
२३०४ एकत्रिंशदुदयेतिर्यग्पंचेंद्रियानधिकृत्यतत्रभंगाद्विपंचाशद-
धिकानिएकादशशतानि सर्वोदयस्थानभंगसंख्ययाचतुस्त्रिंशच्छता-
निपंचषष्ट्यधिकानि ३४६५ द्वेसत्तास्थाने, तद्यथाद्विनवति-
रष्टाशीतिश्च, संप्रतिसंवेध उच्यते, सम्यग्मिथ्यादृष्टेरष्टाविंशतिः बंध-
कस्यद्वेउदयस्थानेतद्यथात्रिंशत् एकैकस्मिन्नुदयस्थानेद्वेसत्तास्थाने-
तद्यथाद्विनवतिरष्टाशीतिश्च एकोनत्रिंशतअत्रापिद्वेसत्तास्थाने तदेवं
एकैकस्मिन्नुदयस्थानेद्वेद्वेसत्तास्थाने इतिसर्वसंख्ययाषट्, संप्रति-
अविरतसम्यग्दृष्टेर्बंधोदयस्थानानिअभिधीयंते तिगछचउत्ति त्रीणि-
बंधस्थानानि तद्यथा अष्टाविंशतिः एकोनत्रिंशत् तत्रतिर्यग्मनुष्या-
णांअविरतसम्यग्दृष्टीनांदेवगतिप्रायोग्यांबध्नतांअष्टाविंशतिः तत्राप्य-
ष्टौभंगाः अविरतसम्यग्दृष्टयोहितिर्यग्मनुष्यानशेषगतिप्रायोग्यंच-
बध्नंति, तेननरकगतिप्रायोग्याअष्टाविंशतिर्नलभ्यते, मनुष्याणांदेव-
गतिप्रायोग्यांतीर्थंकरसहितांबध्नतोएकोनत्रिंशत् अत्राप्यष्टौभंगाः
अष्टावुदयस्थानानिएकविंशतिः षड्विंशतिः सप्तविंशतिः अष्टा-
विंशतिः एकोनत्रिंशत् एकत्रिंशत्, तत्रैकविंशत्युदयेनैरयिकतिर्यग्पं-
चेंद्रियमनुष्यदेवानधिकृत्यवेदितव्यः क्षायिकसम्यग्दृष्टेः पूर्वबद्धायु-
ष्कस्यएतेषुसर्वेष्वपितस्यसंभवात्, अविरतसम्यग्दृष्टिश्चापर्याप्तकेषुनो-
त्पद्यते, ततोपर्याप्तवर्जाः शेषाभंगाः सर्वेपिवेदितव्याः, तेचपंचविं-

१७५

शतिः तत्रतिर्यंग्पंचेंद्रियानधिकृत्याष्टौमनुष्यानधिकृत्याष्टौ देवान-
प्यधिकृत्याष्टौ नैरयिकानधिकृत्यैकः पंचविंशतिसप्तविंशत्युदयोदे-
वान्नैरयिकान्वैक्रियतिर्यंग्मनुष्यानाधिकृत्यावसेयः, तत्रनैरयिकः
क्षायकिसम्यग्दृष्टिर्वादेवस्त्रिविधसम्यग्दृष्टिरप्युक्तंचचूर्णौ, पणवीसस-
त्तवीसो दयायदेवनेरइयवेउव्विय तिरियमणुएपडुच्च नेरईयाखइयवे-
यगसम्मदिट्ठीदेवोतिविहसम्मदिट्ठी त्तिभंगाः अत्रसर्वेप्यात्मीया-
आत्मीयाःसर्वेपिद्रष्टव्याः षड्विंशत्युदयस्तिर्यंग्मनुष्याणांक्षायिकवेद-
कसम्यग्दृष्टीनांचतिरश्चामौपशमिकसम्यग्दृष्टीनांचतिरश्चांद्वाविंशतिस-
त्कर्मणोवेदितव्याः, अष्टाविंशत्येकोनत्रिंशदुदयोनैरयिकतिर्यंग्मनु-
ष्यदेवानांएकत्रिंशदुदयस्तिर्यंपंचेंद्रियाणांभंगाः आत्मीया २ द्रष्टव्याः
चत्वारिसत्तास्थानानि, तद्यथात्रिनवतिः द्विनवतिः एकोननवतिः
अष्टाशीतिश्चतत्रयोऽप्रमत्तसंयतोऽपूर्वकरणोवातीर्थंकराहारकसहिता-
मेवत्रिंशतंबध्वापश्चाद्विरतसम्यग्दृष्टिर्देवोजातस्तमधिकृत्यात्रिनवतिः
अष्टाशीतिश्चतत्रयोऽप्रमत्तस्त्वाहारकंकृत्वापरिणामपरावर्त्तने मिथ्या-
त्वमुपगम्यचतसृणांगतीनामन्यतमस्यांगतौ उत्पन्नस्तस्यतत्रतत्रगतौ-
भूयोपिसम्यक्त्वं प्रतिपन्नस्यद्विनवति देवमनुष्येषुमध्ये मिथ्यात्वमप्रति-
पन्नस्यापिद्विनवतिः प्राप्यतेएकोननवतिर्देवनैरयिकमनुष्याणांअवि-
रतसम्यग्दृष्टीनांतेहित्रयोपितीर्थंकरनामोपार्जयंतितिर्यक्षुतीर्थंकरनाम-
सत्कर्मानोत्पद्यते इतितिर्यग्हीनः अष्टाशीतिश्चतुर्गतिकानामवि-
रतसम्यग्दृष्टीनां, संप्रतिसंवेधउच्यते तत्राविरतसम्यग्दृष्टेरष्टाविंशति-
बंधकस्यअष्टावप्युदयस्थानानि तानितिर्यंग्मनुष्यानधिकृत्यतत्रापि-
पंचविंशतिसप्तविंशत्युदयो वैक्रियतिर्यंग्मनुष्यानधिकृत्य एकैकस्मि-
न्नुदयस्थानेद्वेद्वेसत्तास्थानेतद्यथाद्विनवतिः अष्टाशीतिश्च एकोन-
त्रिंशत् द्विधादेवगतिप्रायोग्यामनुष्यगतिप्रायोग्याचतत्रदेवगतिप्रा-
योग्यातीर्थंकरनामसहितातांचमनुष्याएवबध्नंति एतेषांउदयस्थाना-

नि सप्त तद्यथा ॥ एकविंशतिः पंचविंशतिः षड्विंशतिः सप्तविंशतिः अष्टाविंशतिः एकोनत्रिंशत् मनुष्याणांएकत्रिंशन्नभवति एकैकस्मिन्नुदयस्थानेद्वेसत्तास्थानेतद्यथात्रिनवतिः एकोननवतिश्च मनुष्यगतिप्रायोग्यांचैकोनत्रिंशतंबध्नंति देवनैरयिकाणांउदयस्थानानि पंचतद्यथा एकविंशतिः पंचविंशतिः अष्टाविंशतिः एकोनत्रिंशत्त्रिंशत् देवानांपंचतान्येवषष्ठतुत्रिंशत् ? साचउद्योतवेदकानामवगंतव्या एकैकस्मिन्नुदयस्थानेद्वेद्वेसत्तास्थानेतद्यथाद्विनवतिरष्टाशीतिश्चमनुष्यगतिप्रायोग्यांत्रिंशतंविरतमसम्यग्दृष्टदेवानैरयिकाश्चबध्नंति तत्रदेवानामुदयस्थानानिषट् तान्येवतेषुउदयस्थानेषुप्रत्येकंद्वेसत्तास्थानेत्रिनवतिरेकोनववतिश्चनैरयिकाणांउदयस्थानानिपंचतेषुप्रत्येकं सत्तास्थानमेकोननवतिरेवतीर्थंकराहारकसत्कर्मणोनरकेषूत्पादाभावात् तदेवंसामान्येनएकविंशत्यादिषुत्रिंशत्पर्यंतेषुउदयस्थानेषुप्रत्येकंद्वेसत्तास्थानेत्रिनवतिरेकोननवतिश्चनैरयिकाणामुदयस्थानानिपंच तेषुप्रत्येकंसत्तास्थानमेकोननवतिरेवतीर्थंकराहारकसत्कर्मणोनरकेषूत्पादाभावात् तदेवंसामान्येनएकविंशत्यादिषुत्रिंशत्पर्यंतेषुउदयस्थानेषुसत्तास्थानानिप्रत्येकंचत्वारि तद्यथात्रिनवतिः द्विनवतिः एकोननवतिरष्टाशीतिश्चएकत्रिंशदुदयेद्वे द्वेद्विनवतिरष्टाशीतिश्चसर्वसंख्ययात्रिंशत्इति संप्रतिदेशविरतिःतस्यबंधादिस्थानान्युच्यंते दुगछक्कचउक्कइति देशविरतस्यद्वेबंधस्थाने तद्यथा अष्टाविंशतिरेकोनत्रिंशत् तत्राष्टाविंशतिर्मनुष्यस्यातिर्यक्पंचेंद्रियस्यवादेशविरतस्यदेवगतिप्रायोग्याअष्टौभंगाः तेचतीर्थंकरसहिताएकोनत्रिंशत् साचमनुष्यस्यैव तिरश्चस्तीर्थंकर्मसत्कर्मबंधाभावात् अत्राप्यष्टौभंगाः षडुदयस्थानानि तद्यथापंचविंशतिः सप्तविंशतिः अष्टाविंशतिः एकोनत्रिंशत्त्रिंशत् तत्राद्यानिचत्वारि वैक्रियतिर्यग्मनुष्याणांअत्रएकैकोभंगः तिरश्चामाद्यद्वयोरेकैको अंतिमयोस्तुद्वौद्वौसर्वपदानांप्रशस्तत्वात्त्रिंशत्स्वभावस्थानानां

तिर्यङ्मनुष्याणांअत्रभंगानांचतुश्चत्वारिंशत्शतं १४४ तच्चषाड्भिःसं-
हननैः सुस्वरदुःस्वराभ्यांप्रशस्ताप्रशस्तविहायोगतिभ्यांचजायते
दुर्भगानादेयायशः कीर्त्तीनामुदयोगुणप्रत्ययादेवनभवतिइति तदा-
श्रिताविकल्पानप्राप्यंते, वैक्रियतिर्यग्मनुष्याणांप्रत्येकमेकैकोभंगः
एकत्रिंशत्तिरश्चांअत्रापितएवभंगाः, चत्वारिसत्तास्थानानि तद्यथा
त्रिनवतिः, द्विनवतिः, एकोननवतिरष्टाशीतिश्च तत्रयोऽप्रमत्तोऽ
पूर्वकरणोवातीर्थकराहारकंबद्ध्वापरिणामह्रासेनदेशविरतोजातःतस्य-
नवतिः, सप्तविंशतिः, अष्टाविंशतिः एकोनत्रिंशत्त्रिंशत्एतेषुचप्रत्ये-
कंद्वेद्वेसत्तास्थाने तद्यथा द्विनवतिरष्टाशीतिश्चएवंतिरश्चोऽपि, नवरंत-
स्यएकत्रिंशदुदयोपिवक्तव्यः, तत्रापिचएतेएवद्वेसत्तास्थानेएकोनत्रिं-
शद्बंधोमनुष्यस्यैवदेशविरतस्योदयस्थानानिअनंतरोक्तान्येवपंच, तेषु-
प्रत्येकंद्वेद्वेसत्तास्थाने, तद्यथात्रिनवतिरेकोननवतिश्च तदेवंदेशविर-
तस्यपंचविंशत्यादिषुत्रिंशत्पर्यंतेषु चत्वारिसत्तास्थानानि तथाप्रमत्ते-
बंधस्.. नेद्वेतद्यथाअष्टाविंशतिः एकोनत्रिंशत्एतेचदेशविरतस्यैवभा-
वनीये,पंचउदयस्थानानि तद्यथापंचविंशतिः सप्तविंशतिः अष्टाविंशतिः
एकोनत्रिंशत्त्रिंशदेतानिसर्वाण्यप्याहारकसंयतस्यवैक्रियसंयतस्यवावे-
दितव्यानि, त्रिंशत्स्वभावस्थसंयतस्यापितत्रवैक्रियसंयतानामाहारक-
संयतानांच पृथक्पंचविंशति सप्तविंशत्युदययोः प्रत्येकमेकोभंगः
अष्टाविंशतावेकोनत्रिंशतिचैकैकः सर्वसंख्ययाचतुर्दश १४ त्रिंश-
दुदयः स्वभावस्थस्यापिप्राप्यते, ततश्चतुश्चत्वारिंशदधिकंशतं १४४
तच्चदेशविरतस्यैवभावनीयं सर्वसंख्ययाअष्टपंचाशदधिकंशतं, चत्वारि-
सत्तास्थानानि, तद्यथात्रिनवतिरेकोननवतिः द्विनवतिरष्टाशीतिश्च, त-
त्राहारकसंयतस्यद्विनवतिरेव, आहारकसत्कर्माह्याहारकशरीरमुत्पाद-
यतीतिततस्तस्यद्विनवतिरेववैक्रियसंयतस्यपुनर्द्वेअपितीर्थकरनामस-
त्कर्माचाष्टाविंशतिंनबध्नातिइतित्रिनवतिरेकोननवतिर्नप्राप्यते, एको-

नत्रिंशद्बंधकस्य, पंचस्वपिउदयस्थानेषुप्रत्येकंद्वेसत्तास्थानेतद्यथात्रिन-वतिरेकोननवतिश्च तत्राहारकसंयतस्यत्रिनवतिरेवतस्यैकोनत्रिंशद्बंध-कस्यनियमस्तीर्थकराह्वारकसद्भावात्, वैक्रियसंयतस्यपुनर्द्वेअपितदेवं प्रमत्तसंयतस्यसर्वेष्वपिउदयस्थानेषुप्रत्येकंचत्वारि २ सत्तास्थानानि-प्राप्यन्ते, इतिसर्वसंख्ययाविंशतिः इदानीमप्रमत्तस्यबंधादीन्युच्यंते चउडुगचवत्ते अप्रमत्तसंयतस्यचत्वारि बंधस्थानानितद्यथाअष्टाविं-शतिः एकोनत्रिंशत्त्रिंशत्एकत्रिंशत्तत्राद्येद्वेप्रमत्तस्यैवभावनीये, सै-वाष्टाविंशतिराहारकद्विकसहितात्रिंशत्, आहारकद्विकतीर्थकरसहि-तात्वेकत्रिंशत् एतेषुचतुर्ष्वपिस्थानेषुभंगः एकैकएववेदितव्यः, अ-स्थिराशुभायशः कीर्त्तीनांअप्रमत्तेबंधाभावात् द्वेउदयस्थाने तद्यथा-एकोनत्रिंशत्त्रिंशत्, तत्रैकोनत्रिंशत्योनामपूर्वंप्रमत्तसंयतस्तत्रआ-हारकंवैक्रियंचनिवर्त्त्यपश्चादप्रमत्तभावंगच्छतितस्यप्राप्यते, अत्रद्वौभं-गौएको वैक्रियस्यापरआहारकस्यएवं त्रिंशदुदयेपिद्वौभंगौस्वभावस्थ-स्याप्यप्रमत्तसंयतस्यत्रिंशदुदयोभवति तत्र भंगाश्चतुश्चत्वारिंशदधिकं-शतं १४४ सत्तास्थानानिचत्वारितद्यथात्रिनवतिः द्विनवतिः एकोनन-वतिः अष्टाशीतिश्चसंप्रतिसंवेधउच्यते, अष्टाविंशतिबंधकस्यद्वयोरप्यु-दयस्थानयोरेकैकंसत्तास्थानं अष्टाशीतिः, एकोनत्रिंशद्बंधकस्यापिद्व-योरप्युदयस्थानयोरेकैकंसत्तास्थानंएकोननवतिः, त्रिंशद्बंधकस्यापिद्व-योरप्युदयस्थानयोरेकैकंसत्तास्थानं द्विनवतिः, एकत्रिंशत्बंधकस्या-पिद्वयोरप्युदयस्थानयोरेकैकंसत्तास्थानं त्रिनवतिः, यस्यहितीर्थकरमा-हारकंवासत्सनियमात्तद्बध्नाति तेनएकैकस्मिन्बंधेएकैकमेवसत्तास्था-नंसर्वसंख्ययाअष्टौ, संप्रत्यपूर्वकरणस्यबंधादीन्युच्यंते, पणगणाचउइति अपूर्वकरणस्यपंचबंधस्थानानि, तद्यथाअष्टाविंशतिः एकोनत्रिंशत् त्रिंशत्एकत्रिंशत्एकश्चतत्राद्यानिचत्वारिअप्रमत्तसंयतस्यैवद्रष्टव्यानि एकोनुयशः कीर्त्तिः साचदेवगतिप्रायोग्याबंधव्यवच्छेदेसतिवेदितव्या

एकमुदयस्थानंत्रिंशत् अत्रवज्रऋषभनाराचसंहननषट्संस्थानसुस्वर-दुःस्वरप्रशस्तविहायोगातिः भंगाश्चतुर्विंशतिः अन्येत्वाचार्याब्रुवते आद्यसंहननत्रयान्यतमसंहननयुक्ताअप्युशमश्रेणिंप्रतिपद्यंते, तन्मतेनभंगाद्विसप्ततिः, एवमनिवृत्तिबादरसूक्ष्मसंपरायोपशांतमोहेष्वपिद्रष्टव्यं, चत्वारिसत्तास्थानानि, यथाद्विनवतिः त्रिनवतिः एकोननवतिरष्टाशीतिश्चसंप्रतिसंवेधउच्यते, अष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशत्बंधकानांत्रिंशदुदयेसत्तास्थानानियथाक्रमंअष्टाशीतिरेकोननवतिः द्विनवतिस्त्रिनवतिश्चएकविधबंधकस्यत्रिंशदुदयेचत्वार्यपिसत्तास्थानानिकथमितिचेदुच्यतेइहअष्टाविंत्येकोनत्रिंशत्त्रिंशत् एकत्रिंशद्बंधकाः प्रत्येकंदेवगतिप्रायोग्यबंधव्यवच्छेदेसत्येकविधबंधकाभवंति, अष्टाविंशत्यादिबंधकानांचस्थानानियथाक्रममप्टाशीत्यादीनिसत्तास्थानानि, ततएकविधबंधेचत्वार्यपिसत्तास्थानानिप्राप्यंते संप्रत्यनिवृत्तिबादरस्यबंधस्थानादीन्युच्यंते ॥ ९७ ॥

टबार्थः—मिथ्यात्व गुणठाणे नामकर्मना छ बंधथानक, नव उदयस्थानक, छ सत्ताना थानक पामीये. सास्वादन गुणठाणे तीन बंधथानक, सात उदयथानक ए बे सत्ताना थानक पामीये. मिश्र गुणठाणे बे बंधथानक, तीन उदयथानक बे सत्ताना थानक छे. समकित गुणठाणे तीन बंधथानक, आठ उदयथानक, च्यार सत्ताना थानक छे. देशविरति गुणठाणे बे बंधथानक, च्यार उदयथानक, च्यार सत्ताना थानक छे. प्रमत्ते बे बंधथानक, पांच उदयथानक, च्यार सत्ताना थानक छे. अप्रमत्ते च्यार बंधथानक, बे उदयथानक, च्यार सत्ताना थानक. अपूर्वकरणे पांच बंधथानक, एक उदयथानक च्यार सत्तास्थानक नामकर्मनी नवमे गुणठाणे ॥ ९७ ॥

**एगेगमट्ठएगेगमट्ठ, छउमत्थकेवलिजिणाणं ।**
**एगंचउएगंचउ, अट्ठचउदुछक्कमुदयंसा ॥ ९८ ॥**

टीका—एगेगमट्ठत्ति । अनिवृत्तिबादरस्यएकंबंधस्थानंयशः कीर्तिः एकमुदयस्थानंत्रिंशत्, अष्टौसत्तास्थानानि तद्यथा त्रिनवतिः द्विनवतिरेकोननवतिरष्टाशीतिरशीतिरेकोनाशीतिः षट्सप्ततिः पंचसप्ततिश्चतत्राद्यानिचत्वार्युपशमश्रेण्यांवाक्षपकश्रेण्यांवायावन्नामत्रयोदशकं नक्षीयतेत्रयोदशसुयथाक्रमंत्रिनवत्यादेः क्षीणेषूपरितनानिचत्वारिसत्तास्थानानिबंधोदयस्थानभेदेनभेदाभावात्ऽत्रनसंवेधोभवति इतिनाभिधीयते, सूक्ष्मसंपरायस्यएकंबंधस्थानं यशः कीर्तिः एकमुदयस्थानंत्रिंशत्अष्टौसत्तास्थानानितानिवानिवृत्तिबादरस्यैववेदितव्यानि तत्राद्यानिचत्वार्युपशमश्रेण्यामेवउपरितनानितुक्षपकश्रेण्यां छउमत्थकेवलिजिणाणं इत्यादि छद्मस्थजिनाउपशांतमोहाः क्षीणमोहाश्चकेवलिजिनाः सयोगिकेवलिनोऽयोगिकेवलिनश्चतेषांयथाक्रममुदयसत्तास्थानानि एगंचउ इत्यादि तत्रोपशांतमोहस्यएकमुदयस्थानं त्रिंशत्, चत्वारिसत्तास्थानानि तद्यथात्रिनवतिः द्विनवतिः एकोननवतिः अष्टाशीतिश्चक्षीणकषायस्यएकमुदयस्थानं त्रिंशत्अत्रभंगाश्चतुर्विंशतिरेववज्रर्षभनाराचसंहननस्युक्तस्यैवक्षपकश्रेण्यांसंभवात् तत्रापितीर्थंकरसत्कर्मणः क्षीणमोहस्यसर्वस्थानादिप्रशस्तमित्येकएवभंगः चत्वारिसत्तास्थानानि तद्यथाअशीतिः एकोनाशीतिः षट्सप्ततिः पंचसप्ततिश्चएकोनाशीतिः पंचसप्ततिः, अतीर्थंकरसत्कर्मणोवेदितव्ये, अशीतिः, षट्सप्ततिः, तीर्थंकरसत्कर्मणः सयोगिकेवलिनोऽष्टावुदयस्थानानि तद्यथाविंशतिः, एकविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः,

एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्, एतानिसामान्यतोनाम्नउदय-स्थानचिंतायांसप्रपंचंनिवृत्तानिनभूयोविव्रियंते चत्वारिसत्तास्थानानि तद्यथाअशीतिः, षट्सप्ततिः, एकोनाशीतिः, पंचसप्ततिः, संप्रति संवेधउच्यते, सचपूर्वगुणस्थानकापेक्षयास्वतः ऊह्यः अयोगिकेवलि-नोद्वेउदयस्थाने तद्यथा नवअष्टौचतत्राष्टोदयोअतीर्थंकर अयो-गिकेलिनोनवोदयः तीर्थंकर अयोगिकेवलिनः, षट्सत्तास्थानानि तद्यथाअशीतिः एकोनाशीतिः षट्सप्ततिः पंचसप्ततिः नवअष्टौ तत्राष्टोदयेत्रीणिसत्तास्थानानि तद्यथा एकोनाशीतिः पंचसप्ततिः अष्टौचतत्राद्येद्वेयावद्द्विचरमसमयः तावत्प्राप्यते, चरमसमयेअष्टौ-नवोदयेत्रीणिसत्तास्थानानि, तद्यथाअशीतिः षट्सप्ततिः नवचतत्रा-द्येद्वेयावद्द्विचरमसमयः नव चरमसमये इत्यादि गुणस्थानकेषुनाम-भंगकाः उक्ताः कर्मग्रंथटीकानुक्रमेणभंगोत्पत्तिस्तु स्वोपज्ञसंवेध-प्रकरणगाथातोज्ञेया तदेवंगुणस्थानकेषुबंधोदयसत्तास्थानान्यु-क्तानि तत्सुगमावबोधार्थंयंत्रकन्यासतोज्ञेयम् ॥ तच्चेदम् ॥९८॥

टबार्थः—एक बंधथानक, एक उदयथानक, आठ सत्ता-थानक. दशमे गुणठाणे एक बंधथानक, एक उदयथानक आठ सत्ताथानक छे. छद्मस्थजिन इग्यारमो, बारमो केवलिजिन, तेरमो गुणठाणो, चउदमो गुणठाणो इहां बंध नथी. इग्यारमे गुणठाणे एक उदयथानक, च्यार सत्ताथानक. बारमे गुणठाणे एक उदयथानक, च्यार सत्ताथानक. तेरमे गुणठाणे आठ उदय-थानक, च्यार सत्ताथानक. चउदमे गुणठाणे बे उदयथानक छे. छ सत्ताथानक नामकर्मना जाणवा ॥ ९८ ॥

| गुणठाणा | बंधस्थान | उदयस्थान | सत्तास्थान |
|---|---|---|---|
| मिथ्यात्व १ | २३।२५।२६ २८।२९।३० | २१।२४।२५।२६ २७।२८।२९।३० | ९२।८९।८८।८६ ८०।६८ |
| सास्वादन २ | २८।२९।३० | २१।२४।२५।२६ २७।२९।३०।३१ | ८८ ९२ |
| मिश्र ३ | २८।२९ | २९।३०।३१ | ९२।८८ |
| अविरत ४ | २८।२९।३० | २१।२५।२६।२७ २८।२९।३०।३१ | ९३।९२।८९।८८ |
| देशविरत ५ | २८।२९ | २५।२७।२८।२९ ३०।३१ | ९२।९२।८९।८८ |
| प्रमत्त ६ | २८।२९ | २५।२७।२८।२९ ३१ | ९३।९२।८९।८८ |
| अप्रमत्त ७ | २८।२९।३० ३१ | २९।३० | ९३।९२।८९।८८ |
| अपूर्वकरण ८ | २८।२९।३० ३१।१ | ३० | ९३।९२।८९।८८ |
| अनिवृत्ति ९ | १ | ३० | ९३।९२।८९।८८ ८०।७९।७६ ७५ |
| सूक्ष्मसं १० | १ | ३० | ९३।९२।८९।८८ ८०।७९।७६।७५ |
| उपशांत ११ | ० | ३० | ९३।९२।८९।८८ |
| क्षीणमोह १२ | ० | ३० | ८०।७९।७६।७५ |
| सयोगि १३ | ० | २०।२१।२६।२७ २८।२९।३०।३१ | ८०।७९।७६।७५ |
| अयोगिकेवलि १४ | ० | ८ ९ | ८०।७९।७६।७५ ९।८ |

**आसवतिसुइग, चत्ताइरिआवहिणचत्तसम्मत्ते ।**
**मिच्छविणुदेसेगुण चत्त, अविरइविणुसुजइपणवीसं९९**

टीका—अथाश्रवादितत्त्वभेदान्गुणस्थानेषुविभजन्नाह ॥ तत्राश्रवभेदाद्विचत्वारिंशत् तत्रगाथा। इंदिअकसायअव्वय जोगा-पंचचउपंचतिन्निकमा किरियाओपणवीसं इमाउताउअणुक्कमसो-तत्रेंद्रियाणिपंच स्पर्शनरसनघ्राणचक्षुः श्रवणानितानिचइंद्रियाण्युप-योगरूपाणिमतिज्ञानक्षयोपशमरूपाणि तानिचपुद्गलस्कंधस्यस्प-र्शादिस्थूलपर्यायग्राहकाणितानिचइष्टानिष्टविषयेषुप्रा मेषुरागद्वेषप-रिणतानि मनोज्ञेष्वासक्तानि अमनोज्ञेषुजुगुप्सादिपरिणतानि अभिनवकर्मग्राहकाणिभवंतितेनकर्मग्रहणत्वात्स्पर्शनादीनि इंद्रिया-ण्यपिआश्रवाभवंति, तानिचरागद्वेषविमुक्तानियथार्थंउपयोगेनव-र्णादिगृह्णतेभावरूपाणींद्रियाणितेमतिज्ञानभेदाः आश्रवाइति-कषायाः क्रोधादयस्तेष्वभिनवकर्महेतुत्त्वादाश्रवाः अव्रतानिपं-चप्राणातिपातमृषा अदत्तादानमैथुनपरिग्रहलक्षणाः अभिनवक-र्मग्रहणहेतुत्त्वादाश्रवाः तेचाश्रवाद्विभेदाद्द्रव्याश्रवभावाश्रवभेदात् तत्रद्रव्यतः प्राणातिपातलक्षणः जीवानांद्रव्यतः, प्राणाइंद्रि-योच्छ्वासबलायुरूपाः तेषांअतिपातः द्रव्यप्राणातिपातः भावतः प्राणाः आत्मनः ज्ञानदर्शनचारित्ररूपाः तेषांअतिपातोघातः अ-भिनवकर्मग्रहणेनज्ञानादिगुणानांआवरणलक्षणः भावप्राणातिपातः सआश्रवइतिआत्मनः विशेषस्वभावांतर्गतकर्तृत्त्वपरिणामरूपस्वभा-वाज्ञानादयस्तेषांकर्तृत्त्वस्वभावस्यतदकरणेनपुद्गलग्रहणाक्रियाकर्तृत्त्वेन विपर्यस्तपरिणत्यापरभावकर्तृतारूपःपरिणामः भावप्राणातिपातपरि-णामः मृषाअलीकंतस्यवादः तच्चद्रव्यतः सांसारिकाणांभावानांवितथा भाषणरूपः भावतः मृषाजीवादीनांपदार्थानांनित्यानित्यैकानेका-

स्तिनास्तिताभेदाभेदवक्तव्यावक्तव्यपरिणतानां गुणपर्यायण्यपरिणि-तानांअयथार्थपरिज्ञानं जिनोक्ततत्त्वविरुद्धभाषणं भावमृषा-वादः, आत्मनः स्वरूपग्रहणताशक्तिमतः स्वरूपाप्राप्तौपरभाव-ग्रहणतापरिणतिः अभिसंधिवीर्यादिनाभावादत्तादानं, तस्यचप्रवृत्ति-बाहुल्येनपरेणलोभोदयात्स्वायत्तीकृतानांधन्यधान्यादीनांग्रहणंद्रव्या-दत्तादानं, स्वरूपानंतज्ञानानंदादिस्तद्धर्मभोक्तुः जीवस्यस्वरूपभोग-प्राप्तौपरभावानांरागादीनांवर्णादीनांसंयोगीकृतानांभोगःआस्वादनं-भावमैथुनं तस्यैवअत्यंतपरिणतौइन्द्रियायत्तचेतनायायावैषयिकापरिणतिस्तयाइन्द्रियविषयग्रहणंद्रव्यमैथुनं, स्वभावानांचिदानंदादीनां गुणानांस्वामीपतिः ईश्वरआत्मातेषांचावरणेनवर्णादिगुणपरिणता-नांपुद्गलस्कंधानांचिदानंदादीनांगुणानांस्वामित्वेनाधिपत्यरूपापरि-णतिः भावपरिग्रहः, तत्प्राबल्येनधनधान्यादीनांस्वामित्वरक्षणता-परिणतिः द्रव्यपरिग्रहः, इत्यादि स्वरूपंधर्मसंग्रहणीतोज्ञेयं योगाः परायत्तबलवीर्यपरिणतिरूपाःकर्मग्रहणहेतवः भावयोगाः परिणामालं-बनादिरूपाः द्रव्ययोगास्तदवष्टंभकपुद्गलपरिणाममनोवाक्कायरूपाएवं सप्तदशक्रियाः पंचविंशतयस्तत्रचतुर्विंशतिः सांपरायिकीक्रियाः सांपरायिकीनामसंपरायेणकषायेणसहपरिणतासांपरायिकीक्रिया ए-काइर्यापथिकीतत्रसंपरायेणकषायेणसहपरिणतानांजीवानांयथायो-गानांप्रवृत्तिः सासांपरायिकीक्रिया चतुर्विंशतिविधाकायेननिवृत्ता-कायिकाकायव्यापाररूपाक्रियाकायिकीक्रिया १ अधिकरणंभावतो-गुणघातनंद्रव्यतोप्राणघातनं कारणंअधिकरणं तत्प्रवृत्तिरूपाक्रिया-अधिकरणिकीक्रिया २ प्रकृष्टोद्वेषः परजीवेदुःखदानरूपामनोयोग-परिणतिः प्राद्वेषिकीक्रिया ३ परेषांतापनरूपापरिणतिः पारिताप-निकी ४ प्राणानांद्रव्यभावरूपाणांअतिपातः प्राणातिपातः तद्रूपा-क्रियाप्राणातिपातिकी ५ परप्राणघातेनजीवानांइतस्ततः प्रचालन-

परावर्त्तनरूपाआरंभिकीक्रिया रागद्वेषपरिणाममुख्यत्त्वेनप्रमादाद-नुपयोगतः चापल्येनयाक्रियाभवति साआरंभिकीक्रिया ॥ ६॥ उपकरणानिधनधान्यद्वयः शरीराणिऔदारिकादीनिकर्मयशः सातादितद-भिलाषरूपाअनेकोपायोपसर्जनसंरक्षणइच्छामूर्च्छादिरूपापरिग्रहिकी-क्रिया ॥ ७ ॥ मायाप्रत्ययिकीति—मायाशब्देनचतुर्णामपिकषाया-णांपरिग्रहः क्रोधादिपरिणतोप्रवृत्तस्ययावीर्यप्रवृत्तिः तयायाक्रियासा-मायाप्रत्ययिकी भगवतीवृत्तौतुमायाकापट्यंतेननिर्वृत्तामायाप्रत्ययिकी अप्रशस्ताविषयकषायार्थप्रशस्ताआचार्योपाध्यायादीनांउड्डाहादिगो-पनं ॥ ८ ॥ तथामिथ्यादर्शनप्रत्ययिकीमिथ्यात्विपर्यस्तदर्शनंप्र-तीतिः तत्त्वार्थश्रद्धानलक्षणासात्रिविधा अभिगृहीतानभिगृहीतसंश-यतस्तत्राऽभिगृहीतात्रयाणांत्रिषष्ट्यधिकानांप्रवादिशतानां अनभि-गृहीतं अनभ्युपगतदेवतत्त्वगुरुतत्त्वधर्मतत्त्वस्वरूपाणां, संदिग्धमि-थ्यात्वंप्रवचनोक्तमक्षरमर्थपदंवास्तोकमप्यश्रद्धानस्यभावतोभवति। तत्प्रवृत्तिकुदेवनमनादिरूपातन्निमित्ताक्रियामिथ्यात्विकीक्रिया, अ-प्रत्याख्यानकीक्रिया प्रत्याख्यानआत्मधर्मबाधकपरिणामप्रवृत्तित-द्धेतुकुदेवादिधनस्वजनविषयादीनांत्यागः अकरणरूपाप्रवृत्तिः न-प्रत्याख्यानंअप्रत्याख्यानंतेनअप्रत्याख्यानेननिर्वृत्ताअप्रत्याख्यान-कीक्रिया, दृष्टिर्दर्शनंअवलोकनंजीवाजीवादिवस्तूनांनृपनिर्याणप्रवेश-स्कंधावारसंनिवेशनटनर्त्तनमल्लमेषवृषयुद्धाद्यालोकनादरविषयादृष्टि-कीक्रिया देवकुलसभाप्रपोदकावलोकनरूपाक्रियादृष्टिकीक्रिया तथा-स्पृष्टिकीक्रियास्पृष्टिः स्पर्शनंतत्प्रत्ययाक्रियास्पर्शनकीक्रियाद्विधा-जीवाजीवभेदात्, तत्रजीवस्पर्शिनीयोषित्पुरुषनपुंसकांगस्पर्शन-लक्षणारागद्वेषमोहवतःजीवस्य अजीवस्पर्शनक्रियामृगचर्मकुतत्र-पटशाटकतूलपुष्पादिविषया स्पर्शनप्रत्ययाक्रिया. पाडुच्चीयात्ति-प्रातीत्यकीक्रिया, भाजनादिप्रतीत्ययाक्रियातैलघृतादिभाजना-

नांअनादृतानांजंतुघातादिनिवृत्ताक्रियाप्रातीत्यकीक्रिया, अथवापर-
कृतारंभादिगृहाणांप्रशंसनंतत्प्रातीत्यकीक्रिया, सामंतोपनिपातिकी-
क्रिया समंतात्अनुप्राप्तो सामंतोपनीपातः स्त्रीपुरुषनपुंसकपशुसं-
पातान् उज्झनीयवस्तुत्यागः साचगृहस्थानांभवति, तत्त्वार्थवृत्तौतु-
प्रमत्तसंयतानां भक्तपानादिअनादत्तेअवश्यत्याज्येसमंतादनुपातो-
भवति, संपातिमसत्त्वानामिति नेसत्थित्तिदेशीभाषा परहरत-
कृतजंतुघातादिनाक्रिया नैसत्थिकीक्रिया अथवानैसर्गिकक्रियाचि-
रकालप्रवृत्तपरदर्शितपापार्थभावानांयदनुज्ञानंसानिसर्गक्रियाइति त-
त्त्वार्थवृत्तौ आणवणीत्ति क्षेत्रांतरात्स्वेप्सितवस्तुआनयनरूपाक्रिया
विदारणकी विदारणंजीवाजीवानांद्वैधीकरणं तत्प्रायोग्यकीक्रिया
अथवाविदारणंपराचरित प्रकाशनीयसावद्यप्रकाशीकरणं विदारणं-
तत्प्रत्ययाक्रिया अथवा वितारणक्रियाइत्यपितत्त्वार्थभाष्यपाठात्-
भाषाद्वयामिज्ञः पुरुषोयथैकंवितारयतिअर्हत्प्रणीताज्ञोल्लंघनेनस्व-
मनीषिकयाजीवादिपदार्थप्ररूपणंस्वयंनयनक्रिया अन्यैर्वानयनंस्वच्छं-
दतोनयनक्रियास्याद्वादानपेक्षितकायकारणोपयोगमंतरेणस्वच्छंदोप-
देशरूपाइतिस्थानांगवृत्तौ अनाभोगः अज्ञानं तत्प्रत्ययाक्रिया
अथवा अनाभोगः अप्रत्यवेक्षिताप्रमार्जितेदेशेशरीरोपकरणनिक्षेपः
अनवकांक्षिकीक्रिया, आज्ञाप्रयोगिकीक्रिया आज्ञाबलात्कारेणआ-
देशः तत्प्रयुंजनारूपानृपामात्यादीनांभवति, समुदाणत्ति समुदाय
रूपाचौरादिमारणेझटितितदास्वकार्यार्थंव्रजामइत्यादिसंकल्पयोत्था-
सामुदायिकीक्रिया, पेज्जत्तिप्रेमरागः अभिष्वंगरूपः प्रीतिपरिणाम-
स्तत्प्रत्ययाप्रेमक्रिया, दोसत्ति द्वेषः द्विष्टताअनभिष्वंगरूपोऽप्रीति-
परिणामः तत्प्रत्ययिकीक्रियाइतिएवमेताः क्रियाः सांपरायेणकषा-
येणसहवर्त्तमानस्यजीवस्यव्यापाररूपाः क्रियाः ताअपिप्रशस्ताप्र-
शस्तभेदात् तत्रमिथ्यात्वाप्रत्याख्यानानाभोगरूपाःक्रियाः अप्रश-

स्ताअवशेषास्तुप्रशस्ताःपुण्यबंधकारिण्योऽप्रशस्ताः पापबंधकारिण्यः उभयत्रापिबंधकारणत्वात् आस्रवरूपाएवेतिताअपितीव्रमंदज्ञाताज्ञातभाववीर्याधिकरणकारणविशेषेस्युस्तद्विशेषः उक्तः, सांपरायिकीभेदाश्चतुर्विंशतिः, ईर्यापथिकीच ईरणंकंपनंचलवीर्यत्त्वेनविषयकषायरहितएककः योगव्यापारस्तत्प्रत्ययिकीक्रिया प्रदेशप्रकृतिबंधकारणरूपाइर्यापथिकीक्रिया साअकषायमुनीनामेव, उमशांतमोहक्षीणमोहसयोगिकेवलिचरमसमयंयावत् भवति, एवमुक्ताआस्रवभेदाः तान्चगुणस्थानेषुविभजन्नाह ॥ आसवत्तिसुइत्यादि ९९ ॥ आस्रवाअभिनव कर्मग्रहणहेतवः तिसु इतित्रिषुमिथ्यात्वसास्वादनमिश्रलक्षणेषुगुणेषु इगचत्ता एकचत्त्वारिंशद्भेदाः प्राप्यंते तत्रमिश्रदृष्टौमिथ्यात्वभावेपिसम्यग्दर्शनाभावात्मिथ्यात्विकीक्रियासद्भावएवउक्तंचभगवत्यां नैरयियाणंभंतेसव्वेसमकिरिया गो० नोतिणट्ठेसमट्ठेसेकेणट्ठेणंगो० नेरईआतिविहापन्नत्तासम्मदिट्ठीमिच्छादिट्ठीसम्मामिच्छादिट्ठी तत्थणं जेतेसम्मदिट्ठीतेसिणंचत्तारिकियाओपन्नत्ताओ तंआरंभियापरिग्गहियामायावत्तिआपच्चरकाणीया तत्थणं जे ते मिच्छादिट्ठीतेसिणंपंचकिरियाओपन्नताओ तंआरंभिया परिग्गहिया जावमिच्छादंसणवत्तीआ एवंसम्मामिच्छदिट्ठीणंपिअवैमानिकपर्यंतंसूत्रालापकइतितेनमिश्रगुणस्थानकेपिमिथ्यात्विकीक्रिया सद्भावः एवं एकचत्त्वारिंशद्भेदाः इरियावहिहीणं ईर्यापथिकीक्रिया हीनात्ति रहितालभ्यंते चत्तइतिचत्त्वारिंशतआस्रवभेदाः सम्मत्तेइति सम्यग्दर्शनलक्षणेगुणस्थानके पूर्वोक्ताइर्यापथिकीक्रिया मिथ्यात्त्विकीक्रियांविनाभवति, देसि देशविरतौ गुणचत्त एकोनचत्त्वारिंशद्भेदाः अप्रत्याख्यानिकीक्रियारहिताआस्रवाणामिति अत्रत्रसाविरतिरेवनास्ति शेषाएकादशविरतयः संत्येवतर्हिकथंसर्वअविरतेरभावः अत्रस्थावरादिअविरतिसद्भावेपिसापेक्षत्त्वेनतप्तलोहपंदधृति-

संनिमंइन्द्रियविषयसेवत्त्वेननाप्रत्याख्यानकीक्रियाइति अथवा परि-मिताश्रवत्त्वेननामत्याख्यानकीइति सुजइति सुइत्ति शोभनः यतिः सुयतिः प्रमत्तमुनिः गुणस्थाने पंचविंशतिरास्रवभेदाभवंति ॥९९॥

टबार्थः—आश्रवतत्वना ४२ भेद छे. इन्द्रिय ५ कषाय ४ अव्रत ५ योग ३ किरिया २५ एवं ४२ छे. इनमध्ये मिथ्यात्व सास्वादन मिश्र ए तीन गुणठाणे इकतालीस आश्रव छे, इरियावही क्रिया नथी, ते अकषाय तेहवे तेणे सकलायी थानके ए नथी. समकित गुणठाणे च्यालीस आश्रव छे. एक ईरियावही किरिया नीकली हती. वली मिथ्यात्वकी किरिया नीकली एतले च्यालीस छे. देशविरति गुणठाणे च्यालीस आ-श्रव छे. अपच्चरकाणकी किरिया नथी. सुयति–छट्टे गुणठाणे पंचवीस आश्रव छे. ॥ ९९ ॥

**पाणाइवायपरिग्गह, मिच्छअपचरकआणपाओगी।**
**पाडुच्चीअसामंतो, वणीअनेसत्थीसाहत्थी ॥१००॥**

टीका—प्राणातिपातिकीक्रिया १ परिग्रहिकीक्रिया २ मि-थ्यातिवकीक्रिया ३ अप्रत्याख्यानिकीक्रिया आज्ञाप्रयोगिकीक्रिया प्राडुच्चीक्रिया प्रातित्यक्रिया सामंतोपनिपातिकीक्रिया नेसत्थीक्रिया साहत्थीक्रिया ॥१००॥

टबार्थः—प्राणातिपातकी क्रिया १ परिग्रहकी क्रिया २ मिथ्यात्वकी क्रिया ३ अपच्चरकाणकी क्रिया ४ अन्नापायोगकी क्रिया ५ पाडुच्चिय क्रिया ६ सामंतोवणी क्रिया ७ नेसत्थी क्रिया ८ साहत्थीकी क्रिया ॥१००॥

**आणवणीसमुदाणी, इरियावहीणअवयविहिणा ।**
**अन्नेइंदीयहीणा, वीसंछट्ठेगुणठाणे ॥१०१॥**

टीका—आणवणत्ति आणवणीक्रिया सामुदायिकीक्रिया ईर्यापथिकीक्रिया तथाअव्रतपंचविहीनाशेषाः पंचविंशतिरास्रवभेदाः प्रमत्तेप्राप्यंते तेचेमेइंद्रियाणिपंचकषायाश्चत्वारः योगास्त्रयः क्रियास्त्रयोदशएवंपंचविंशतिः अथवाअन्येआचार्याः पंचइन्द्रियहीना-वींसनामविंशतिः आस्रवाःषष्ठेगुणस्थानकेलभ्यंते, भावधर्मव्याख्या-नाधिकारिणःआत्मोपयोगस्यविषयासक्तत्वेनस्वरूपैकत्वपरिणामात्-इंद्रियगृहीतविषयग्रहणेनापिनवैषयिकतातेनइंद्रियाश्रवत्वाभावः१०१

टबार्थः—आणवणि क्रिया १० समुदायिकी क्रिया ११ इरियावहीकी क्रिया १२ ए बार क्रिया हीण कहेतां काढीये ए पांच अव्रत काढीये तेवारे पंचवीस छे, अने कोईक आचार्य कहे पांच इंद्रिय पण काढीये तो वीसभेद आश्रवना छे, छठे गुणठाणे छे इहां हरिभद्रनी व्याख्याये किटलिक प्रस्तनी छती माने छे ते पुन्य प्रकृति बांधे इंम कह्युं छे ॥१०१॥

**आरंभहीणसत्तम्मि, मायावित्तीविहीणअडनवमे ।**
**दोसविहीणादसमे, सेसेइरियावहीयेगा ॥१०२॥**

टीका—आरंभहीणइत्यादिसत्तम्मि सप्तमेगुणस्थानेआरंभिकी-क्रियाहीनाएकोनाविंशतिरास्रवभेदाः अप्रमत्तेप्राप्यंते, तथाष्टमेन-वमेगुणस्थानेमायाप्रत्ययिकीक्रिया विहीनात्तिरहिताअष्टादशभेदाः आस्रवाणांप्राप्यंते,तत्रमतांतरेमायाकषायोदयंयावत्मायाप्रत्ययिकी-क्रियातच्चात्रनविवक्षितं, दोसत्ति द्वेषिकीक्रियारहिताः दशमेसूक्ष्मसं-

परायेनवआस्रवाः प्राप्यंते, इत्यनेनलोभकषाययोगत्रिककायिकीदृष्टिकीस्पृष्टिकीअनाभोगिकीरागप्रत्ययिकीइतिनवास्रवभेदादशमेप्राप्यन्ते दोसविहीणात्ति द्वेषाभावकथनेनअधिकरणप्राद्वेषिकीपारितापनिकीप्रमुखाः सर्वाअपिक्रियानिरस्ताभवंति, शेषेउपशांतमोहक्षीणमोहसयोगिकेवलिलक्षणेगुणस्थानत्रिकेईर्यापथिकीक्रिया १ योगत्रिकंचएतेचत्वारआस्रवभेदाः प्राप्यंते, अयोगीनिराश्रवइतिश्रीप्रज्ञापनायांलोभस्यरागांशत्वात् रागिकीक्रियादशमेप्राप्यते, इतिउक्ताआस्रवभेदाः ॥ १०२ ॥

टबार्थः—ते मध्येथी आरंभकी क्रिया हीण करीये तेवारे सातमे गुणठाणे ओगणीस आश्रव छे, माया प्रत्ययिकी क्रिया विना आठमे नवमे गुणठाणे अढार आश्रव छे, दशमे गुणठाणे द्वेष प्रत्ययिकी क्रिया नथी, लोभ ते मुख्यवृत्ते रागमां गण्यो छे, पन्नवणानी टीका मध्ये शेष इग्यारमे बारमे तेरमे गुणठाणे एक इरियावहीकी क्रिया रूप एक आश्रव योग छे, चऊदमे गुणठाणे आश्रवतत्त्वनो भेद नथी ॥१०२॥

**अज्जयदुगिबारभावण, दुपमत्तेपंचवन्नअदुचरणा ।**
**चउपन्नापुव्वदुगे, लेवन्नाखीणमोहंजा ॥१०३॥**

टीका—अथसंवरभेदान्गुणस्थानेषुकथयन्नाह तत्रसंवरभेदाः सप्तपंचाशत्,तत्रअयंपूर्वोक्तः आश्रवः पौरुषेयः सचकदाचित् केनचित् अत्यंतमुच्छिद्यतेऽपिपुंसासमाससादितत्तदुच्छेदसाधनात्यंतिकंक्षयमापद्यते तत्रपूर्वोपार्जितकर्मजालविच्छेदायतपसोनिर्जराचेतिवक्ष्यति, अभिनवकर्मोपचयनिवारणायसंवरमेवतावद्वक्ष्याम आस्रवनिरोधः संवरः आसूयतेसमादीयतेयैः कर्माष्टक(मिति)आस्रवाः कर्मणांप्रवेशवीथयः इंद्रियकषायादयः तेषांनिरोधः संवरः आत्मनः कर्मोपादानहेतुभूत-

परिणामाभावः संवरः सचसर्वदेशात्द्विधा बादरसूक्ष्मयोगरोधकाले-सर्वसंवरः शेषकालेचरणप्रतिपत्तेरारभ्यदेशसंवरः ससंवरः केनोपाये-नकर्तव्यः इत्युपायदर्शनार्थतत्त्वार्थोक्तंसूत्रं संगुप्तिसमितिधर्मानुप्रेक्षा-परीषहजयचारित्रैः त्रिपंचदशद्वादशद्वाविंशतिभेदैर्यथाक्रमंसप्तपं-चाशत्भवंति, तत्रसम्यग्प्रशस्तमुमुक्षोर्योगनिग्रहोगुप्तिः, आत्मसं-रक्षणंयोगाः मनोवाक्कायलक्षणा एतेषांनिग्रहो निगृहीतिः प्रवचन-विधिनामार्गव्यवस्थापनंउन्मार्गगमननिवारणंसम्यग्आगमोक्तानुसा-रेणरक्ताद्विष्टपरिणतिसहचरिष्णोः मनोवाक्कायव्यापारनिर्व्यापारतागुप्तिः त्रिप्रकारा मनः संकल्परूपस्तस्यगोपनं मनोगुप्तिः, वाक्सत्यादि-भेदातस्यगोपनंवाग्गुप्तिः, कायः चलतारूपयोगस्यऔदारिकादेः गो-पनंकायगुप्तिः, योगानामप्रवृत्तिः अथचसंसरतः चेष्टावतोपिसंवर-सिध्यर्थंमिमाः पंचईर्याभाषणादाननिक्षेपोत्सर्गाः समितयः तत्रई-रणंईर्यागतिपरिणामः आवश्यकार्थंआगमोदिते विहारेजिनसद्मआ-हारोगोचरीविहारोस्थंडिल्यंग्रामानुगमनंचइत्यादिकार्यैः आगमो-क्तविधिनारागद्वेषाकुलतादिमंतरेणनिः संगतासाध्यत्वेनगमनंईर्यास-मितिः, आहच उपयोगोद्योतालंबनमार्गविशुद्धिभिर्यतेश्चरतः सूत्रो-दितेनविधिनाभवतीर्यासमितिरनवद्या १ आत्मनेपरस्मैहितमायत्या-मुपकारकंमुखवसनावाहितस्यनीतिबहुप्रयोजनमात्रसाधकं मितमसं-दिग्धंसूत्रोक्तमर्थंवर्णप्रतिपत्तौवानसंदेहकारिनिरवद्यार्थमनुपघातकंष-ण्णांजीवकायानांएवंविधनियमितंचसर्वदैवभाषणं भाषासमितिः, आ-हचत्यक्त्वानृतादिदोषंसत्यमसत्त्वानृतंचनिरवद्यं सूत्रानुविधिवदतो भाषासमितिर्भवतिसाधोः ॥ १ ॥ अथैषणामाह आहारंचतुर्भे-दंउपकरणानिरजोहरणमुखवसनपटीचोलपट्टादिचतुर्दशप्रकाराणिस्थ-विरकल्पजिनकल्पयोग्योपधिः औपग्रहिकाणांश्रुतधर्मचरणंधर्मसाध-नार्थंपात्राणियतनायाहारग्रहणार्थं एकांतस्वाध्यायादिनिमित्तंउद्गमो-

त्पादनैषणादोषरहितंआगमोक्तविधिनाधूमांगारादिदोषरहिताएषणा-
गवेषणासमितिः, यद्यपिनिर्ग्रंथानाहारार्थिनरतथापिवाचनादिकरणे-
प्युपयोगव्याघातकरक्षुतृशीतादिभालोक्यहिदिदोषरहितंअदानः अ-
व्यापकः असंभ्रांतः असक्ततयाआहारादिकरोति तद्गवेषणास-
मितिः, तथादाननिक्षेपणासमितिमाह रजोहरणादिचतुर्दशोपकर-
णानांपीठफलकशय्यादीनांआदानंग्रहणंनिक्षेपणंमुंचनं । तत्रजी-
वादिरहितमन्यरयादिष्टतयाकरणंप्रमाज्यंआदानंनिक्षेपः कर्तव्यः
इत्यादाननिक्षेपणासमितिः, पारिष्ठापनिकासमितिमाह स्थंडिलं
उज्झितव्यवस्तुपरिष्ठापनक्षेत्रं तत्रस्थावरजंगमजंतुवर्जितंचक्षुषानिरी-
क्ष्यउपयुक्तः पुद्गलेषुअद्वेषतो दोषाभावतः बाधकत्त्ववारणाय
वस्त्रपात्राहारशिष्यमलादीनांउत्सर्गः परिष्ठापनासमितिः इतिपंचस-
मितयः, संवरार्थमात्मनाधार्यतेइतिधर्मःसचदशविधस्तत्र प्राधान्येन-
निर्ग्रंथानांतेन मुनिधर्मोदेशतः श्रावकाणामपिक्षमादिकंहितायेवेति
क्षमणंक्षमाक्रोधत्यागः इत्यनेनप्रशंसानिंदावंदनछेदनादिप्राप्तौसम-
परिणामरूपाक्षमा अत्यंताशुभशुभोदयेस्वकृतविपाकवेदनेऽविक-
ल्पइतिक्षमा नहिक्रोधीममस्वभावः नाहंक्रोधस्यकर्त्ताइत्यादिभा-
वनायास्तथ्यपरिणतिः क्षमा १ मार्दवमस्तब्धपरिणामः नीचैर्वृ-
त्तिः अभ्युत्थानासनदानांजलिप्रग्रहयथार्हविनयकरणरूपानीचैर्वर्त्तनं
उत्सेकश्चित्तपरिणामोगर्वरूपस्तद्विपर्ययोऽनुत्सेकः अवगतसंसारस्व-
भावः विशिष्टजातिकुलसंपदः कदाचिदेवसंपद्यंते, कदाचिद्धीना-
स्ततोनगर्वपरिणामः मदनिग्रहोमानविघातश्चेत्यर्थः, जात्यादिकंसर्वे-
मपिऔदयिकऐश्वर्यादिकंक्षणभंगुरंतेनतत्रकोमदः, अहंतुनिर्मलानंद-
स्वभावः अतोमानकषायोनममकार्यं सम्यग्दर्शनादयोममकार्यं न-
मदादिममकार्यं इत्यादिभावनयामदत्यागीमार्दवमिति, आर्जवस्वरूपं-
तुमायात्यागः आर्जवमृजुभावइत्यर्थः मायाकापट्यं द्रुह्यतानि-

कृतिः साचपरकीयवस्तुग्रहणार्थंभवति परवस्तुग्रहणंच ममनसंयु-
ज्यते नाहंपरभोगीतेनमायांकः करोति अतोमायात्याग आर्जवंमम-
धर्मइति ३ अलोभ शौचलक्षणंलोभस्तुभावतः परमार्थतोऽमिष्वंगः
चेतनाचेतनमिश्रवस्तुविषयः लोभदोषाच्चक्रोधमानमायाहिंसानृतस्ते
यान्नह्मपरिग्रहार्जनमलजालेनोपचीयमानः आत्माभवति अशुचिः
तेनभावविशुद्धिः ममत्वाभावो निःसंगता अपरद्रोहणात्माऽर्थानुष्ठा-
नंनिःकल्मषतानिर्मलताभावसाधनमात्रंरजोहरणादिषुविगतमूर्छःमुनिः
शुचिः तेनएतंशौचं अपरनाममुक्तिइत्यादि ४ विद्यमानेअर्थेभवं-
सत्यंसंतोजीवादिपदार्थाः तेनहितंअनेकांतनयप्रमाणसप्तभंगेनिक्षे
पानुगतंसत्यं श्रुताभ्यासपूर्वकंअविसंवादिअर्हच्छासनानुगतंज्ञानं
सत्यंतद्उपयुक्तंवाक्यमपिसत्यंतदात्मनः धर्मः आत्माहियथार्थोपयो-
गीयथार्थोपयोगिनोममधर्मोयथोपयोगिताएवसत्यं तदनुगतंअपरुषं-
असंभ्रांतंरागद्वेषविमुक्तंश्रोतुः धर्मप्रापकंद्रव्यभावाहिंसामूलंवाक्यं
तदपिधर्मः ॥ ५ ॥ असमंजसयोगनिग्रहः संयमः सचसप्तदशविधः
स्थावरपंचत्रसचतुष्काबाधकरूपः योगत्रयगुणसंरक्षणप्रवर्त्तनबंधानु-
यायिप्रवृत्तिवारणरूपः योगसंयमः प्रेक्ष्यचक्षुषादृष्ट्वास्थंडिलादित्वक्
प्रवर्त्तनादिकरणेप्रेक्षासंयमः यत औदयिकभाववास्थादिग्रहस्थातग्र-
हणंतद्अपेक्षऔदासीन्यंभजतः अपेक्षासंयमोभवति अपहृत्यपरि-
वर्ज्यंउपकरणादीनांलाघवंकुर्वतः संयमोभवति तदपहृत्यसंयमः
भक्तपानाद्यर्थंपथिगच्छतः सचित्तरजोनुरंजितचरणस्यस्थंडिलात्
स्थंडिलंसंक्रामतः प्रमार्जनसंयमः उपकरणसंयमः अथवाअ-
जीवकायसंयमः अजीवकायानांपुस्तकादीनांअन्यतरेषुरागद्वेषरूप
परिणामत्यागअजीवकायसंयमः इतिसप्तदशविधसंयमआत्मनः धर्मो-
भवति यतः परभावानुयायिप्रवर्त्तनंअधर्मः तत्परित्यागोधर्मः इति-
संयमव्याख्यातः तपोधर्मः तत्रतपतितापयतिइतितपः तपतिइति-

स्वयंउद्विग्नोभवतिसंयोगजसुखात् तापयतिआत्मप्रदेशेस्थितान् कर्मदलिकानितितपः शरीरेंद्रियतापात् कर्मदहनाच्चतपः भावतअनंतज्ञानानंदादितत्त्वेस्वस्वरूपेभोगतोआनंदेनस्वरूपैकाग्र्यंसंवरतपः परभावत्यागः परभावानभिलाषस्तत्संकोचादिरूपंनिर्जरातपः तच्चद्वादशविधं बाह्याभ्यांतरभेदात्तच्चनिर्जराधिकारतोज्ञेयंत्यागस्वरूपंतुआत्मनः शरीरोपध्याहारोपाश्रयादिषुअभिष्वंगहेतुभूतंआत्मनः परभावानुगत्वरूपोभावदोषः तस्यत्यागपरिणामः आत्मनः धर्मोभवति आकिंचन्यंतुस्वात्मनः सत्तारूपंस्याद्वादपरिणतिपरिपाट्यास्यात् अस्तिपक्षगृहीतात्मभावस्यआत्मत्वेनोपादेयतयाकृत्वाशेषंस्यान्नास्तितापक्षभूतंपरव्यूहं तत्रनिर्ममत्वंआकिंचन्यंयत्मदीयसत्तातोअन्यत्नाहंअहंतुस्वस्वभावगुणपर्यायवान्चिदानंदस्वरूपस्यकर्त्ताभोक्ताविलसितान्यभावानांरागद्वेषादीनांअभोक्ताअतस्तद्बाधकत्वमवेक्ष्य । तत्रनिर्ममत्वंआकिंचन्यं ॥ ९ ॥ ब्रह्मचर्यस्वरूपंतुबृंहत्वादात्माब्रह्मतत्रावृत्तिः आत्मनिउपयोगरमणभोगतयावर्त्तनंब्रह्मचर्यंब्रह्मणिआत्मनिचरणं एकीभावेनअवस्थानं ब्रह्मचर्यंतद्रक्षणाय परभावभोगात्मकंभावमैथुनं स्त्रीशरीरस्पर्शादिद्रव्यमैथुनंत्याज्यं आत्मस्वरूपैकत्वरूपब्रह्मचर्यरूपदृढीकरणार्थं गुरुकुलवासेवसितव्यं गुरुशुद्धात्मतत्त्वज्ञापकात्मतत्त्वरमणता संरक्षणकोपयोगदाता स्वयमपिस्वतत्त्वविलासी न पुद्गलाशी गुरु स्तस्यांतेवासित्वं परमात्मतत्त्वप्राग्भावहेतुत्वात् यावज्जीवंसेव्यं आचार्योपाध्यायादीनांसंसर्गः तत्त्वोपपदेशकारणमितिब्रह्मचर्यस्थैर्यार्थंस्त्रीसंसक्तवसत्यादित्यागरूपाभावना श्रीउत्तराध्ययनोक्ताः श्रयंतिनिर्ग्रंथाः एवंविधंब्रह्मचर्यंआत्मधर्मंएवंव्याख्यातं दशविधोयतिधर्मं स्तद्दृढीकरणार्थंभावनाभावनीया ताश्चद्वादशअनित्याअशरणाद्या .इतितत्रसर्वसंयोगाअनित्याः संयोगोवियोगयुक्तएवअवस्तत्र कोरागइत्यादिअनुपेक्षाअशरणोऽयं आत्मा-

